# सुगन्धयात्रा

चन्दना कुतूहलेन पुरातनं श्रीगन्धवृक्षं दृष्टवती । कियान् उन्नतः ! कियान् गौरवपूर्णः ! कीदृशं सुगन्धं प्रसरति एषः !




किमेतत् ? श्रीगन्धस्य फेनकं, चूर्णं दन्तफेनः वा भवद्भिः न उपयुज्यते किम् ? द्विसहस्रवर्षेभ्यः पूर्वमेव आयुर्वेदेन उष्णशोथस्य उपशमनाय श्रीगन्धस्य उपयोगः ज्ञातः आसीत् । कालिदासः ऋतुसंहारकाव्ये विवृतवान् अस्ति यत् - 'नवयुवतयः शरीरम् आर्द्रं रक्षितुं चर्मरोगेभ्यः निवारयितुं च सर्वत्र श्रीगन्धलेपनं कुर्वन्ति' इति ।

**निरुक्ते** (वेदसंहिता, क्रि.पू.५ शतकं), पतञ्जलेः **महाभाष्ये** (१००क्रि.पू), कौटिल्यस्य **अर्थशास्त्रे** (क्रि.पू. २००) **रामायणे महाभारते** तथा अन्येषु अपि पुरादनेषु ग्रन्थेषु श्रीगन्धस्य विषये उल्लेखं द्रष्टुं शक्नुमः ।

तेभ्यः ८० र्षेभ्य श्रीगन्धस्य सुगन्धं हं गृहं प्रति आनयत् अस्ति मैसूर- श्रीगन्धसंस्था ।




## सुगन्धविनोदः

श्रीगन्धस्य परिचयः भवतां कियता परिमाणेन अस्ति इति ज्ञातुम् एतेषां प्रश्नानाम् उत्तरं दीयताम् ।

१. श्रीगन्धवृक्षः अस्मिन् वर्गे अन्तर्भवति - पतिदारु/नित्यहरित्/पतनशीलः
२. श्रीगन्धस्य फलसमृद्धिम् एतेन क्रमेण प्राप्नुवन्ति पातनात्/मूलोत्पाटनात्
३. श्रीगन्धतैलम् अत्र दृश्यते त्वक्प्रदेशः/अन्तः हृद्दारु/पर्णानि
४. श्रीगन्धवृक्षः प्रवृद्धः भवितुम् एतावन्ति वर्षाणि अपेक्षितानि - १० - २०/६० - ७०/१०० - १२०

उत्तराणि
१. नित्यहरित् २. मूलोत्पाटनम्
३. अन्तः हृद्दारु ४. ६० - ७०

# एतस्य अङ्कस्य विशेषाः

सम्पुटः - १९ जुलै - २००२ सञ्चिका - ०४



पुराणकथावली

२४



राजभक्तिः (वेतालकथा)

१९



मायासरोवरम्

११



विघ्नेश्वरः

४५





## अन्तरङ्गम्




**SUBSCRIPTION**

**For USA and Canada**
**Single copy $2**
**Annual subscription $20**
*Remittances in favour of Chandamama India Ltd.*
to

**Subscription Division**
CHANDAMAMA INDIA LIMITED
No. 82, Defence Officers Colony,
Ekkatuthangal, Chennai - 600 097
E-mail : subscription@chandamama.org

**उपायनीक्रियताम्**

वायुयानेन भारतेतरदेशान् प्रति
वार्षिकं (१२ सञ्चिकाः) - रू.९००/-
भारते रू. १२०/- (बुक्पोस्ट् द्वारा)
भवदीयं धनं D.D.द्वारा धनादेश(M.O.)द्वारा वा
'Chandamama India Limited'
नाम्ना प्रेषणीयम् ।

विज्ञापिकादानार्थं सम्पर्क्यताम् -
**चेन्नै -**
Ph - 044-2347384, 2347399
e-mail : advertisements@chandamama.org
**देहली -**
मोना भाटिया
Ph - 011-6515111/6565513/6565516
**मुम्बयी -**
शकीलमुल्ला
Ph - 022-2661599/2661946/2653057


© The stories, articles and designs contained in this issue are the exclusive property of the Publishers. Copying or adapting them in any manner/ medium will be dealt with according to law.

भारतनायकस्पर्धायां भागम् ऊद्ध्वा प्राप्नुवन्तु अपूर्वाणि पारितोषिकाणि

# भारतीयाः नायकाः-१०

**रामायणं भारतं च सुप्रसिद्धे । तयोः सन्ति नायकाः बहवः । तान् अधिकृत्य सज्जीकृताः सन्ति प्रश्नाः । उत्तरं लिख्यताम् ।**

**समुचितोत्तरदातारः त्रयः पुरस्क्रियन्ते द्विचक्रिकादानेन**

**1** अहम् आ जन्मनः अग्रजस्य पक्षं न परित्यक्तवान् । अहम् अयोध्याधिपतेः दशरथस्य पुत्रेषु अन्यतमः । मम नाम किम् इति एतावता ऊहितवन्तः स्युः खलु भवन्तः ?

..................................................

**2** स्वबुद्धिमत्तया अहं कदाचित् मम भ्रातुष्पुत्रं रक्षितवान् । अहम् अस्मि धृतराष्ट्रस्य सहोदरः । मम नाम किम् ?

..................................................

**3** मम सहोदरः सीताम् अपहृत्य रामेण सह युद्धं कृतवान् । किन्तु अहं रामपक्षम् आश्रित्य युद्धे रामस्यैव साहाय्यं कृतवान् । एषः अहं कः ?

..................................................

**4** अहं वायुदेवस्य अनुग्रहात् जातः, पाण्डवेषु अन्यतमः च । मम नाम किम् ?

..................................................

**5** अहं पक्षिजातिः । रावणेन नीयमाना सीता मया दृष्टा । सीताम् अन्विष्य आगतं रामम् अहम् एतां वार्ताम् अवदम् । मम नाम किम् ?

..................................................



प्रतिप्रश्नम् उत्तरं लिखन्तु । एतेषु पञ्चसु नायकेषु प्रियतमः कः किमर्थं च इति दशभिः शब्दैः लिखन्तु । **मम प्रियतमः नायकः** ..................................................

..................................................

..................................................

..................................................

भागग्रहीतुः नाम ..................................................

वयः .................... कक्ष्या ....................

सङ्केतः ..................................................

..................................................

..................................................

पिन् .................... दूरवाणी ....................

एतं पुटं पृथक्कृत्य प्रेषयन्तु अधोनिर्दिष्टसङ्केताय -

**भारतनायकस्पर्धा-१०**
चन्दमामा इण्डिया लिमिटेड्,
८२, डिफेन्स् आफीसर्स् कालोनी
एक्काडुतङ्गल्, चेन्नै - ६०० ०९७
उत्तरप्रेषणाय अन्तिमदिनाङ्कः - ५, आगस्ट्, २००२

***नियमाः -***

१. अधिकाष्ट-ऊनचतुर्दशवर्षीयाः एतस्यां स्पर्धायां भागं ग्रहीतुम् अर्हन्ति ।
२. विविधभाषाभिः प्रेषितानि उत्तराणि परिशील्य त्रयः श्रेष्ठाः चीयन्ते । यदि योग्योत्तरदातारः बहवः तर्हि प्रियतमनायकविषये लिखितं वाक्यम् अवलम्ब्य चयनं क्रियते ।
३. निर्णायकानां निर्णयः एव अन्तिमः ।
४. एतं विषयम् अधिकृत्य पत्रव्यवहारः कोऽपि न करणीयः ।
५. विजेतारः पत्रद्वारा सूच्यन्ते ।






संस्थापकौ –
चक्रपाणिः नागिरेड्डी च

# वयं वाञ्छामः शान्तिं, न तु समरम्

वयम् इदानीं कष्टकालं सम्मुखीकुर्वन्तः स्मः । सीमाप्रदेशे यः गोलकास्त्रविनिमयः भवति तद्विषयिणीं वार्तां पत्रिकासु प्रतिदिनं पठामः वयम् । भारतस्य पाकिस्थानस्य च नायकाः भयोत्पादकतां युद्धं च अधिकृत्य वक्तव्यानि श्रावयन्ति । दिने दिने परिस्थितिः गम्भीरा जायमाना अस्ति ।

विनाशं कष्टानि च आनयति युद्धम् । युद्धम् इतोऽपि न आरब्धम् । तथापि एतावता एव काश्मीरस्थाः ग्रामाः रिक्तीकृताः सन्ति इति वार्ताः श्रूयन्ते । तेषां कष्टानि ऊहन्ताम् । येषां निमित्तं बहूनि वर्षाणि व्ययितानि तादृशानां गृहसम्पदादीनां त्यागः किं सुकरः ? धान्यैः उपेतानि क्षेत्राणि अपि त्यक्तव्यानि तैः । तेषु क्षेत्रेषु तैः किं किं वर्धितं स्यात् इति को वा जानाति ? यदि कृषकाः क्षेत्राणि परित्यजन्ति तर्हि वस्तुवाहक-वितारक-विक्रेतृप्रभृतयः सहस्रशः जनाः निर्गतिकाः भवन्ति ।

युद्धतः सैनिकाः प्राणैः वियुक्ताः भवन्ति, निरपराधिनश्च जनाः कष्टसागरे पतन्ति । वस्तूनां मूल्यानि वर्धन्ते, आहारधान्यादीनाम् अभावः भविष्यति....एते सर्वे एकस्य युद्धस्य परिणामाः ।

वयम् इदानीं वाञ्छामः शान्तिं, न तु समरम् । ''शान्तिः आकाशात् झटिति न पतति । यदा सङ्घर्षस्य मूलकारणानि अपगतानि भवन्ति तदा एव शान्तिः विकसेत्'' इति उक्तवान् अस्ति जवाहरलालनेहरू ।

उभयदेशयोः मध्ये सङ्घर्षमयवातावरणस्य मूलकारणानि न सुलभतया निवारयितुं शक्यानि । यतः आ पञ्चाशद्वर्षेभ्यः प्रवर्तमानानि प्रवर्धमानानि च सन्ति तानि । चन्दमामा शान्तिम् अभिलषति । उभयदेशयोः जनान् नायकान् च सा अभ्यर्थयति शान्तिं भाविजनतायाः हिताय ।

---

*सम्पादकः* – **विश्वम्**

Visit us at : http://www.chandamama.org



# प्रेङ्खोलः आसन्दः

चरणः कश्चन निपुणः तक्षकः । सः तारुण्ये समग्रं देशम् अटितवान् । वार्धक्ये सः स्वग्रामं प्रति आगतः । ग्रामे तस्य कार्यकौशलं सर्वेषां प्रशंसापात्रम् अभवत् । समीपस्थेषु सर्वेषु ग्रामेषु अपि तस्य कीर्तिः प्रसृता ।

एकदा तस्य मनसि विचारः उत्पन्नः यत् मया अभूतपूर्वः कश्चन आसन्दः निर्मातव्यः, यस्य आसन्दस्य उपयोगः सर्वेषु अपि कार्येषु भवेत्, तन्नाम उपवेशनं, शयनं, परावर्तनं, विश्रान्तिस्वीकरणम् इत्यादिषु सर्वेषु अपि कार्येषु सः आसन्दः विशेषतः उपकारकः भवेत् इति ।

एवं विचिन्त्यः सः कार्यारम्भं कृतवान् एव । मासं यावत् कार्ये मग्नेन तेन कश्चन आसन्दः निर्मितः । मच्चिन्तनानुगुणम् एतस्य आसन्दस्य उपयोगः अस्ति वा न वा इति मासं यावत् स्वयमेव परीक्षितवान् सः । परिणामं दृष्ट्वा स्वसामर्थ्ये बहुधा विश्वासवान् सन्तुष्टश्च अभवत् सः । यदा विक्रयणचिन्तनम् आरब्धं तदा तस्य मनसि विचारः उत्पन्नः यत् अधिकमूल्यकम् एतं क्रेतुं सामान्यः कोऽपि सर्वथा न अर्हति, भूस्वामी एकः एव एतं क्रेतुं सामर्थः इति ।

अतः सः 'भूस्वामिने एषः आसन्दः विक्रेतव्यः' इति निश्चित्य तम् आसन्दं शकटे आरोप्य भूस्वामिनः गृहं प्रति प्रस्थितः ।

मध्याह्ने मार्गे कस्यचित् वटवृक्षस्य अधः सः स्वस्य शकटं स्थगितवान् । आनीतं पाथेयं भुक्त्वा अश्वाय अपि तृणं दत्त्वा सः ततः प्रस्थातुं सिद्धः । तावता तत्र कश्चन सुन्दरः अश्वशकटः आगतः ।

तस्य पृष्ठतः द्वौ पुरुषौ वार्तालापं कुर्वन्तौ दृष्टौ । तयोः एकः उन्नतः, श्मश्रुलः च । तस्य हस्ते काचित् उत्तमा यष्टिः आसीत् । तस्य वस्त्रमपि अत्युत्तमम् । तस्य पृष्ठतः तदीयः सेवकः शिरः अवनमय्य आगच्छन् आसीत् ।

सेवकस्य दृष्टिः अकस्मात् चरणस्य शकटे स्थिते आसन्दे पतिता । सः चरणं पृष्टवान् -

"एषः आसन्दः अद्भुतः इव दृश्यते । भवतः वा एषः ?" इति ।

"आम् । एषः प्रेङ्खोलः आसन्दः । पूर्वं कुत्रापि न दृष्टः अपि" इति वदन् चरणः तस्य आसन्दस्य वैशिष्ट्यादिकम् उक्त्वा एतस्य निर्माणे अनुभूतः श्रमः कियान् इत्यपि विवृतवान् । तथैव - "अस्य आसन्दस्य विक्रयणार्थं भूस्वामिनः गृहं गच्छन् अस्मि । एतस्य विक्रयणात् न्यूनातिन्यूनं पञ्चसहस्रं रूप्यकाणि वा प्राप्नुयाम्" इति आशाभावं प्रकटितवान् ।

एतत् श्रुत्वा सः श्मश्रुलः - "यदि भूस्वामिना तावतः धनस्य दानं निराक्रियते तर्हि किं क्रियते ?" इति हसन् पृष्टवान् ।

तदा चरणः - "चत्वारि सहस्राणि पृच्छामि" इति अवदत् ।

तदा पुनः सः श्मश्रुलः पृष्टवान् - "तावदपि धनं दातुं निराकरोति चेत् किं करोति भवान् ?" इति ।

"तर्हि त्रीणि सहस्राणि इति वदामि" इति प्रत्युत्तरं दत्तं चरणेन ।

"तदपि न अङ्गीक्रियते चेत् किं क्रियते भवता ?" पुनः सः श्मश्रुलः पृष्टवान् हसन्नेव ।

'एतस्य हसने कोऽपि गूढार्थः अस्ति' इति चरणाय अभासत । 'किमपि विचित्रं वस्तु युगपदेव दृष्ट्वा एते हसन्तः सन्ति' इति तस्य भासः अभवत् । अतः चरणः विनयेन अवदत् - "भूस्वामी यदि सहस्रद्वयमपि दातुं न सिद्धः तर्हि अहं प्रतिगमिष्यामि । यदा यदा मम मनः विश्रान्तिम् अपेक्षते तदा अहम् अस्मिन् आसन्दे उपविश्य प्रेङ्खोलं करिष्यामि" इति ।



अनेन वचनेन, श्मश्रुलेन सह स्थितः सेवकोऽपि हसितुम् आरब्धवान् । ततः तौ द्वौ अपि यानम् आरुह्य गतौ ।

तद्दिने एव सायं चरणः भूस्वामिगृहं प्राप्तवान् । द्वारपालकः अन्तर्गमनं न निषेधितवान् । कोऽपि तं कमपि प्रश्नं न कृतवान् एव । 'कोऽपि मां कमपि प्रश्नं किमर्थं न पृच्छति ?' इति चरणस्य मनसि महदाश्चर्यम् अजायत ।

तस्मिन् समये भूस्वामी स्वस्य सचिवेन, द्वित्रैः राजभटैः च सह वार्तालापं कुर्वन्नासीत् । ते राजभटादयः सुन्दरम् उष्णीषं धृतवन्तः आसन् । तेषां वस्त्राणि अपि शुभ्रतया शोभन्ते स्म । भूस्वामिनं दृष्ट्वा चरणः किञ्चिदिव भीतः । तस्य मनसि विचारः आगतः -

'विनाह्वानं मया आगत्य किं किमपि अकार्यं कृतम् ? मयि भूस्वामी क्रुद्धः भवति चेत् मया किं करणीयम् ?' इति ।

किन्तु तथा किमपि न अभवत् । भूस्वामी हसन्मुखः एव आसीत् । तेन चरणस्य सङ्कोचः अपगतः । अतः सः धैर्यम् अवलम्ब्य आसन्देन सहैव भूस्वामिनः समीपम् आगत्य प्रणामं कृतवान् । स्वेन आनीतस्य आसन्दस्य वैशिष्ट्यं पुनः उक्तवान् ।

भूस्वामी तस्य वचनं सश्रद्धं श्रुत्वा - ''भवादृशः उत्तमः तक्षकः अस्माकं ग्रामे एव अस्ति इति तु सन्तोषस्य विषयः । एतं प्रेङ्खोलम् आसन्दं कर्तुं महान् श्रमः भवता अनुभूतः स्यात् । वदतु, कियत् धनम् अपेक्ष्यते भवता ?'' इति पृष्टवान् ।

तदा चरणः अवदत् - ''पञ्चसहस्रं रूप्यकाणि'' इति ।

ततः परं ये ये वार्तालापाः अभवन् ते सर्वेऽपि मध्याह्ने वटवृक्षसमीपे प्रवृत्ताः वार्तालापाः इव एव आसन् ।

चरणेन चिन्तितम् - 'एषः भूस्वामी महान् कृपणः' इति । ततः सः स्वनिर्णयं श्रावितवान् - ''भवान् अस्य आसन्दस्य मूल्यं न्यूनातिन्यूनं सहस्रद्वयं वा यदि दद्यात् तर्हि एतं भवते दास्यामि, नो चेत् प्रतिगमिष्यामि । इतोऽपि न्यूनमूल्येन विक्रयणं तु सर्वथा न शक्यते एव'' इति ।

भूस्वामी तस्य वचनं श्रुत्वा हसितः । तस्य हसनं तादृशम् एव आसीत्, पूर्वं वटवृक्षस्य समीपे स्थितस्य श्मश्रुलस्य यादृशम् आसीत् । इदानीं चरणेन सम्यक् अवगतं यत् एषः सः एव मनुष्यः, यस्य च मेलनं मध्याह्ने वटवृक्षस्य समीपे अभवत् इति ।

अतः सः कम्पमानस्वरेण - ''आर्य ! अहं क्षन्तव्यः । मया न ज्ञातमेव यत् भवान् एव भूस्वामी इति । अतः अद्य मध्याह्ने प्रणामोऽपि मया न समर्पितः भवते । मया महान् प्रमादः कृतः । एषः आसन्दः मया उपायनरूपेण भवते समर्प्यते'' इति वदन् नमस्कृतवान् ।

एतत् वचनं श्रुत्वा न केवलं भूस्वामी, अपि तु तत्रत्याः सर्वेऽपि उच्चैः हसितवन्तः । भूस्वामी चरणाय दशसहस्रं रूप्यकाणि दापितवान् ।

चरणः भूस्वामिनः गुणान् प्रशंसन् महता सन्तोषेण ग्रामं प्रतिनिवृत्तः ।





# मायासरोवरम्

## ४

*[विशालस्य वटवृक्षस्य अधः सिद्धसाधकः एकं पुरातनं ताडपत्रं प्राप्तवान् । किन्तु राजकुमारः राजकुमारी च कुत्र इति तु न ज्ञातम् । तौ अन्विष्यन्तौ सिद्धसाधकः जयशीलश्च अरण्यं प्रविष्टवन्तौ । तस्मिन् एव समये तत्प्रदेशीये ग्रामे निवसन्तः जनाः कृषिक्षेत्रं प्रति दण्डादिकं गृहीत्वा गच्छन्तः मकरचर्मयुक्तस्य गजस्य उपरि उपविष्टं मकरमुखं कञ्चित् विचित्रं पुरुषं दृष्टवन्तः । गजारूढः सः आक्रमणार्थं गजं प्रेरयन् आसीत् । तदनन्तरम् ......]*

स्वसमीपे आगच्छन्तं गजं, तदुपरि उपविष्टं मकरमुखं पुरुषं च दृष्ट्वा ग्रामीणाः सर्वे नितरां भीताः । मकरमुखः गजं प्रेरयन् उच्चस्वरेण अवदत् – ''मां यः पीडयितुम् उद्युक्तः भवति तम् एव अहं पीडयामि, न अन्यम् । अतः अलं भीत्या'' इति ।

एतानि वचनानि श्रुतवतां ग्रामीणजनानां मनसि धैर्यम् आगतम् । ''गजारूढः जनः मकरमुखं धृतवान् चेदपि स तु कश्चन मानवः एव'' इति भावः तेषु धैर्यम् अपूरयत् । आश्चर्येण स्तब्धान् तान् ग्रामीणान् उद्दिश्य मकरमुखः अवदत् – ''भवतां नायकः कः ? सः कुत्र ? यः रक्षाकुट्याम् उपविष्टः आसीत् सः तरुणः किं भवद्ग्रामस्य एव ? मया सः सूचितः आसीत् यत् उत्तमः आहारः, योग्यः वैद्यः च आनेतव्यः इति । किन्तु दण्डहस्तान् भवतः सर्वान् दृष्ट्वा अहं चिन्तयामि यत् भवन्तः मां मारयितुम् आगताः सन्ति इति । किम् एतत् उचितम् ?'' इति ।

एतत् श्रुत्वा ग्रामीणानां भीतिः पुनरपि किञ्चित् अपगता । एतस्य व्यवहाराः मानवस्य इव एव सन्ति इति ज्ञात्वा ते समाश्वासनं प्राप्तवन्तः । ग्रामप्रमुखः अग्रे आगत्य



स्वादुभोजनं गृहे सज्जीक्रियमाणम् अस्ति । वैद्यः तु उपस्थितः एव । न केवलं वैद्यः, अपि तु वैद्यौ आगतौ'' इति ।

मकरमुखः स्वस्य उदरे लग्नं खड्गं सकृत् दृष्ट्वा वेदनाम् अनुभवन् उक्तवान् - ''तौ वैद्यौ कुत्र स्तः ?'' इति ।

ग्रामप्रमुखः बुद्धिमान् उपायनिपुणः च । सः हस्तस्थं दण्डम् उन्नीय ग्रामीणान् उद्दिश्य उच्चस्वरेण - ''अस्माकं चरकाचार्यः कुत्र ? वीरः च क्व गतः ?'' इति अपृच्छत् ।

चरकाचार्यः वीरः च भीत्या ततः पलायने उद्युक्तौ आस्ताम् । ग्रामीणाः तौ गृहीत्वा अग्रे आनीतवन्तः । ग्रामप्रमुखः तौ दर्शयन् - ''मकरमुखवर्य ! एतौ एव अस्माकं ग्रामस्य वैद्यौ । उभौ अपि चिकित्सायां निपुणौ । एतयोः चिकित्सा अपूर्वा'' इति अवदत् ।

मकरमुखं प्रणम्य अवदत् - ''मकरमुखवर्य ! वयं क्षन्तव्याः । रक्षाकुट्यां स्थितः बालः आगत्य भवदुक्तं सर्वम् अस्मान् उक्तवान् एव । किन्तु सः अपूर्वस्य गजस्य, अपूर्वस्य मकर-मुखस्य मानवस्य च वार्ता यत् उक्तवान् तस्मात् वयं सम्भ्रान्ताः । गजानां समूहः आगत्य अस्माकं क्षेत्राणि नाशयन् अस्ति इति वयं भावितवन्तः । अतः एव वयं तान् इतः दूरं प्रेषयितुं दण्डादिकं गृहीत्वा आगताः'' इति ।

एतत् श्रुत्वा गजस्थः मकरमुखः हस्तम् उन्नीय - ''अये ! मया यत् पृष्टं तस्य उत्तरमात्रं वदतु आदौ । किम् एतेन विवरणेन ? मम आहारः कुत्र ? वैद्यश्च क्व ?'' इति अपृच्छत् कोपेन ।

तस्य कोपं दृष्ट्वा ग्रामप्रमुखः एकं पदं पृष्ठतः संस्थाप्य अवदत् - ''मकरमुखवर्य ! भवदर्थं

ततः मकरमुखः स्वस्य मुखावरणम् अपनीतवान् । सः प्रायः चत्वारिंशद्वर्षीयः, श्वेतकायः च । वलयाकारतां गताः तदीयाः केशाः स्कन्धपर्यन्तं प्रसृताः आसन् ।

''एषः तु सामान्यमानवः एव । कस्मिंश्चित् राजपरिवारे जातः स्यात् एषः'' इति चरकाचार्यस्य कर्णे एव अवदत् वीरः ।

''राक्षसाः कामरूपिणः भवन्ति । अपेक्षिते काले अपेक्षितं रूपं धर्तुं समर्थाः ते । एषः यः कोऽपि स्यात् चेदपि मया तु चिकित्सा करणीया एव । रोगग्रस्तस्य सर्वस्य चिकित्सा करिष्यते इति मया प्रतिज्ञा कृता अस्ति गुरोः पुरतः'' इति उक्तवान् चरकाचार्यः ।

''मया अपि विद्यादातुः गुरोः पुरतः

एतादृशी एव प्रतिज्ञा कृता अस्ति । तदस्तु, एतस्य चिकित्सार्थं भवान् एव आदौ प्रवर्तताम्'' इति उक्तवान् वीरः ।

चरकाचार्यः गजसमीपं गत्वा विनयेन अवदत् - ''मकरमुखवर्य ! भवतः कः रोगः ? कथं सः आरब्धः ? कृपया सर्वं वदतु'' इति ।

''किं भवान् अन्धः ? मम उदरे खड्गः लग्नः अस्ति इति किं भवान् न जानाति ?'' इति वदन् मकरमुखः उदरे लग्नं खड्गं दर्शितवान् ।

तदा चरकाचार्यः - ''प्रभो ! एतादृश्यां शस्त्रचिकित्सायां वीरः एव समर्थः । यदि सः खड्गं बहिः आनयेत् तर्हि अहं रक्तस्रावम् अवरोध्य व्रणस्य चिकित्सां करिष्यामि । एतदर्थं कानिचन मूलानि सङ्ग्रहणीयानि'' इति उक्त्वा मूलानां सङ्ग्रहार्थं गुल्मप्रदेशं प्रति गतवान् ।

एतदनन्तरं वीरः गजम् आरुह्य मकर-मुखस्य उदरे लग्नं खड्गं परिशीलयन् अवदत् - ''महोदय ! प्रथमदर्शनात् एव भाति यत् एषः खड्गः कस्यचित् राजपरिवारीयस्य स्यात् इति'' इति ।

मकरमुखः तस्य मुखं पश्यन् अवदत् - ''भाति इति किम् ? वस्तुतः अपि एषः कस्यचित् राजपरिवारीयस्य एव । कश्चन दुष्टः राजकुमारः मां खड्गेन प्रहरन् मम उदरे एतं प्रवेशितवान् । तम् अहं सजीवं ग्रहीतुम् इच्छामि स्म । तत्कारणतः मया एषा विपत् सम्प्राप्ता । मया सह स्थिताः सर्वे पलायितवन्तः । अनन्य-गतिकः अहं मम प्राणरक्षणाय एतस्मिन् प्रदेशे



अटन् अस्मि'' इति ।

एतत् श्रुत्वा वीरः झटिति अवगतवान् यत् एतेन उच्यमानः राजकुमारः सः एव स्यात्, यस्य च अपहरणम् अभवत् इति श्रूयते । 'एवं तर्हि राजकुमारस्य अपहरणकर्तृषु एषः अपि अन्यतमः स्यात् । चिकित्साव्याजेन खड्गम् उदरे एव इतस्ततः चालयामि चेत् एषः अल्पे एव काले मरणं प्राप्नुयात् । किन्तु एषः मारितः चेत् राजकुमारी राजकुमारः च क्व स्तः इत्येतत् अज्ञातम् एव स्थास्यति । अतः चिकित्सया एतस्य रक्षणम् एव वरम् । चिकित्सानन्तरम् उपायेन एषः राजाधीनी-करणीयः' इति सः अचिन्तयत् ।

ततः सः ग्रामप्रमुखम् उद्दिश्य अवदत् - ''शस्त्रचिकित्सायाः अनन्तरम् एषः अस्माद्-ग्रामं प्रति नेतव्यः भवति विश्रान्त्यर्थम् । अतः



न वदिष्यामि । एषोऽहम् इदानीं खड्गम् अपनयामि । तदवसरे वेदना भवेत् । सोढव्यं कृपया'' इति ।

मकरमुखः सम्मतिं सूचयन् शिरः चालितवान् । वीरः पूर्णं बलम् उपयुज्य खड्गम् आक्रष्टुं यावत् उद्युक्तः तावता अनतिदूरात् चरकाचार्यस्य आक्रन्दनं श्रुतम् - ''रक्षन्तु, मां रक्षन्तु कृपया'' इति । तेनैव सह द्वित्राणां गजानां गर्जनध्वनिः अपि श्रुतः ।

ग्रामप्रमुखः मकरमुखस्य समीपम् आगत्य अवदत् - ''मान्यवर ! चरकाचार्यस्य आक्रन्दनं सकृत् श्रुतं, पुनः न श्रुतम् । अतः भासते यत् सः मारितः अपि स्यात् इति । गजानां समूहस्य सम्मुखीकरणम् अविवेकाय । अतः तेषाम् अत्र आगमनात् पूर्वं ग्रामं प्रति गमनम् एव वरम् इति निर्णीतवन्तः स्मः वयम्'' इति ।

झटिति कञ्चित् प्रेषयित्वा वासादिव्यवस्था-कारणं वरम्'' इति ।

तदा मकरमुखः मन्दस्वरेण वीरम् अवदत् - ''भोः, भवतः नाम वीरः इति खलु ? भोः वीर, शृणोतु, वेदनापीडितः अहं यथास्थितम् उक्तवान् । अतः मम रहस्यं भवता ज्ञातं स्यात् पूर्णतः । किन्तु स्मरतु, एतत् कस्यापि पुरतः न प्रकटनीयम् । यदि भवान् ग्रामीणान् एतम् अंशं वदेत् तर्हि भवन्तं खण्डशः कर्तयिष्यामि'' इति ।

तत् श्रुत्वा वीरः कम्पमानस्वरेण उक्तवान् - ''महोदय ! कृपया अहं न क्षन्तव्यः । षण्णां पुत्रीणां पिता अस्मि । ताः निर्गतिकाः न करणीयाः कृपया । वैद्यविद्यया कथञ्चित् कुटुम्बपोषणं कुर्वन् अस्मि । मम कुटुम्बं निर्गतिकं मा करोतु । मया ज्ञातम् अहं कमपि

''ग्रामं प्रति गमनं भवतां क्षेमाय स्यात् । किन्तु मम चिकित्सायाः का गतिः ? एतं खड्गखण्डम् उदरे धृत्वा कियत्कालं मया अटनीयम् ?'' इति वेदनापूर्णस्वरेण अपृच्छत् मकरमुखः ।

एतदभ्यन्तरे चरकाचार्यस्य आक्रन्दनं पुनरपि श्रुतं - 'रक्ष्यताम्' इति । अनन्तरक्षणे एव वृक्षशाखाः उत्पाटयन्तः घीङ्कुर्वन्तः आगच्छन्तः गजाः अपि दूरात् दृष्टाः तैः ।

मकरमुखः झटिति मकरमुखाकारकेण शिरस्त्राणेन मुखम् आवृत्य स्वगजं गमनाय चोदितवान् । तस्य हस्ते दीर्घं त्रिशूलम् आसीत् । यदा गजः वेगेन पदानि अस्थापयत् तदा वीरः उच्चैः आक्रन्दनम् अकरोत्

'रक्ष्यताम्, रक्ष्यताम्' इति । चरकाचार्यस्य आक्रन्दनम् अपि अतिशेते स्म तदीयम आक्रन्दनम् ।

वीरस्य आक्रन्दनम् उपेक्षमाणः मकरमुखः उच्चस्वरेण आज्ञापयत् – ''जलग्रह ! अग्रे सर'' इति ।

जलग्रहनामकः तदीयः गजः वेगेन पदानि स्थापयन् अग्रे गत्वा स्वदन्ताभ्याम् एकं वन्यगजं व्रणितं कृतवान् । वेदनया क्रन्दन् सः वन्यगजः भूमौ अपतत् । अवसरं प्राप्य मकरमुखः स्वीयेन त्रिशूलेन अपरं गजं कुम्भस्थले प्रहृतवान् । वेदनां प्राप्य सः गजः शिरः अवनमय्य भूमिम् अस्पृशत् । एतस्मात् भीताः अन्ये गजाः परिवृत्य पलायनं कृतवन्तः । मकरमुखः अनुसृत्य गत्वा तान् दूरे प्रेषितवान् । सर्वे यदा दूरं गताः तदा स्वस्य गजस्य गमनम् अवरुद्धवान् सः । अत्रान्तरे तेन वीरः स्मृतः । सः उच्चैः आह्वयत् – ''वीर ! वीर !'' इति ।

तदीयपीठस्य पृष्ठभागे स्थितः वीरः अपृच्छत् – ''मकरमुखवर्य ! अहं गजस्य पुच्छं गृहीत्वा स्थितः अस्मि । वयं जयं प्राप्तवन्तः, उत ते वन्यगजाः ?'' इति ।

वीरः जीवति इति ज्ञात्वा समाधानं प्राप्तवान् मकरमुखः अवदत् – ''भवान् प्राणापायं विना स्थितः अस्ति दैवकृपया । जलग्रहस्य उपरि सम्यक् उपविशतु तावत् । मम उदरे लग्नं खड्गं भवान् कदा अपनेष्यति ?'' इति ।

''महोदय ! त्वराकरणेन न किमपि प्रयोजनम् । गजानां निवारणे मग्नः भवान्



वस्तुस्थितिं विस्मृतवान् इति भाति । चरकाचार्यस्य ध्वनिः अत्रैव क्वचित् श्रुतः । मूलानि आनेतुं सः एतस्याम् एव दिशि आगतः आसीत्'' इति अवदत् वीरः ।

''स्यात् नाम । यदि कोऽपि व्याघ्रः तं खादितवान् स्यात् तर्हि किम् एषः खड्गः मम उदरे एव तिष्ठेत् ? किं भवान् खड्गम् अपनीय अपेक्षितां चिकित्सां कर्तुं न अर्हति ?'' इति अपृच्छत् मकरमुखः ।

तदा वीरः अवदत् – ''महोदय ! अहं तु शस्त्रचिकित्सातज्ज्ञः । एतस्य तात्पर्यम् एतत् न यत् अहम् अन्यविधचिकित्साः न जानामि इति । वस्तुतः अन्यविधचिकित्साः अजानन् इव व्यवहरन् अहम् एतस्मिन् ग्रामे जीवामि । मया अक्रियमाणां चिकित्सां चरकाचार्यः करोति । परस्परस्पर्धाम् अकुर्वन्तौ आवां



चिकित्सायाः एकैकं क्षेत्रं चित्वा कार्यं कुर्वन्तौ उदरं पूरयावः । यदि प्रतिद्वन्द्वभावनया आवयोः अन्यतरः एव सर्वविधचिकित्सां कुर्यात् तर्हि ग्रामीणाः अन्यतरं ग्रामात् निष्कासयेयुः एव'' इति ।

''अये जनवञ्चक ! एतस्य तात्पर्यं यत् भवान् शस्त्रचिकित्सेतरचिकित्सां न करोति इति । अस्तु, सः चरकाचार्यः कुत्र गतः इति अन्विष्याव तावत्'' इति वदन् मकरमुखः स्वस्य गजम् अग्रे प्रवर्तितवान् ।

चरकाचार्यस्य आक्रन्दनं जयशील-सिद्धसाधकाभ्याम् अपि श्रुतम् आसीत् । तौ गुल्मे प्राप्तं ताडपत्रं गृहीत्वा तत्स्वामिनः अन्वेषणे उद्युक्तौ आस्ताम् । चरकाचार्यस्य आक्रन्दनं यस्यां दिशि श्रुतं तस्यां दिशि एव तौ गच्छन्तौ आस्ताम् । ताभ्यां गजानां समूहः दृष्टः, तं निवारयन् जलग्रहारूढः मकरमुखः, तेन कृतं गजानां दूरप्रेषणं चापि दृष्टम् ।

एतत्सर्वं दृष्ट्वा सिद्धसाधकः स्वदण्डम् उन्नीय उक्तवान् - ''जयशील ! एषः दुष्टः एव कनकाक्षमहाराजस्य पुत्रौ अपहृतवान् स्यात् । मया पूर्वं यथा उक्तं तथा एषः कश्चन गन्धर्वः, यक्षः, किन्नरः वा स्यात्'' इति ।

अत्रान्तरे पुनरपि चरकाचार्यस्य आर्तनादः श्रुतः । जयशीलः झटिति कोषतः खड्गम् आकृष्य - ''अये, अलं भयेन । एषोऽहम् आगच्छन् अस्मि'' इति वदन् वेगेन अग्रे गतवान् ।

सिद्धसाधकः जयशीलेन सह गन्तुं न इच्छति स्म । तथापि अनन्यगतिकतया सः तेन सह अगच्छत् । तौ चरकाचार्यसमीपं गतवन्तौ । तत्र कश्चन अजगरः चरकाचार्यं स्वशरीरेण बद्ध्वा तदीयशिरसः गिलने प्रयतमानः आसीत् ।

जयशीलः झटिति अग्रे गत्वा स्वखड्गेन चरकाचार्यस्य शिरसः समीपे स्थितम् अजगरस्य शिरः दूरीकर्तुं प्रयत्नं कृतवान् । चरकाचार्यस्य व्रणादिकं यथा न भवेत् तथा जागरूकतया खड्गप्रयोगं कुर्वन् आसीत् सः । किन्तु अजगरः विशेषप्रतिरोधं प्रदर्शयति स्म । प्रायः सः बुभुक्षितः आसीत् । अतः प्राप्तस्य गिलने उपस्थितं विघ्नं न सहते स्म सः । सः बलेन खड्गं दूरीकरोति स्म ।

''जयशील ! अजगरेण गृहीतः एषः वनवासी इव न दृश्यते, प्रत्युत सुशिक्षितः इव भासते । अविलम्बेन तम् अजगरं संहरतु तावत्'' इति अवदत् सिद्धसाधकः ।

जयशीलः अवकाशं प्राप्य अजगरस्य शिरः वामहस्तेन गृहीतवान् । तं पार्श्वे आकर्षन् दक्षिणहस्ते स्थितेन खड्गेन बलात् प्रहृतवान् । एतस्मात् अगजरस्य शिरसः अर्धभागः कर्तितः इव । अतः अजगरः वेदनया विलुण्ठनम् अकरोत् ।

अजगरेण सह भूमौ पतितं चरकाचार्यम् उन्नीय गृहीत्वा जयशीलः सिद्धसाधकम् अवदत् - ''सिद्धसाधकवर्य ! शीघ्रं गत्वा जलम् आनयतु । एषः जीवितः अस्ति, किन्तु मूर्च्छां गतः'' इति ।

सिद्धसाधकः धावन् गत्वा समीपस्थात् सरोवरात् कमण्डलुना जलम् आनीतवान् । जयशीलः चरकाचार्यस्य मुखस्य उपरि जलस्य सेचनं कृतवान् । ततः चरकाचार्यः नेत्रे उन्मीलितवान् । सः मन्दस्वरेण अपृच्छत् - ''अहं कुत्र अस्मि ? अहं जीवितः अस्मि, उत अजगरस्य उदरे अस्मि ?'' इति ।

''भवान् जीवितः अस्ति । आदौ मन्त्रजलं पिबतु । ततः भवतः भयं दूरं गमिष्यति'' इति वदन् सिद्धसाधकः तं जलं पायितवान् ।

भयेन कम्पमानः एव चरकाचार्यः नेत्रे उन्मीलितवान् । सः अपृच्छत् - ''भवन्तः के ? सः मकरमुखः कुत्र ? वीरः कुत्र अस्ति ?'' इति ।

तस्य वचनात् स्पष्टं जातं यत् सः कस्य विषये पृच्छन् अस्ति इति । जयशीलः सिद्धसाधकम् अवदत् - ''एतस्य वचनं श्रुतं खलु ? एषः मकरशरीरस्य गजस्य, मकर-मुखस्य च विषये वदन् अस्ति'' इति ।

ततः सः चरकाचार्यम् अपृच्छत् - ''भवतः नाम किम् ? भवान् मकरमुखस्य सेवकः, उत मित्रम् ?'' इति ।

चरकाचार्यः यावत् किमपि वक्तुम् उद्युक्तः तावता वृक्षाणां मध्यतः मकरमुखः गजारूढः सन् आगच्छन् अवदत् - ''एषः चरकाचार्यः मम वैद्यः । कः भवान् ? भवन्तौ यदि सत्यं न वदेतां तर्हि मम गजः एषः जलग्रहः भवन्तौ पादाभ्यां विमर्दयिष्यति'' इति ।

जयशीलः सिद्धसाधकः च तं क्रोधेन दृष्टवन्तौ । जयशीलस्य हस्तः अप्रयत्नेन खड्गम् अगृह्णात् । सिद्धसाधकः नेत्रे रक्तीकृत्य हस्तेन स्वकीयं दण्डं गृहीतवान् ।

- *(अनुवर्तते)*



# शुनकस्य सम्माननम्

कश्चित् शुनकः कदाचित् राजानं दष्टवान् । रात्रौ यदा राजा गुप्तवेषेण सञ्चरन् आसीत् तदा एषा घटना प्रवृत्ता आसीत् ।

तदा सः श्मश्रुलः आसीत् । शिरसि बृहत् उष्णीषम् अपि धृतवान् आसीत् । ललाटे तिलकं च धृतवान् आसीत् । लघुमार्गेषु एतादृशवेषेण सञ्चरन्तं तं दृष्ट्वा शुनकः एनं चोरं भावयन् आक्रम्य दष्टवान् आसीत् । राजा तु शुनकात् कथमपि विमोचनं प्राप्य राजभवनम् आगतः ।

सद्यः एव राजवैद्यम् आहूय योग्यचिकित्सां प्राप्तवान् । सः अपायात् मुक्तः जातः ।

प्रातः एतं विषयं ज्ञात्वा सेनाध्यक्षः धावन् आगतः । सः भयात् कम्पमानः आसीत् । राज्ञः पुरतः अञ्जलिं बद्ध्वा दुःखितः सन् महता विनयेन सः उक्तवान् - ''महाराज ! मां क्षाम्यतु । मार्गेषु अटतः शुनकान् मारयितुम् अहम् आदेशं दत्तवान् आसम् । तथापि एवम् अभवत् । इतःपरम् मया एव एतत् कार्यं क्रियते । अग्रे कोऽपि शुनकः राज्ये यथा न भवेत् तथा करिष्यामि'' इति ।

राजा एतत् श्रुत्वा हसन् अवदत् - ''भोः ! भवान् पराक्रमी स्यात्, किन्तु न बुद्धिमान् । कश्चन शुनकः मां दष्टवान् इत्यस्य अर्थः - सर्वे शुनकाः मारणीयाः इति न । मां दष्टवता तेन शुनकेन कोऽपि अपराधः न कृतः । मम वेषं दृष्ट्वा सः शुनकः मां चोरं भावयन् अदशत् । सत्यांशः एषः यत् चोरग्रहणं सैनिकानां कार्यम् । यत् कार्यं सैनिकैः कर्तुं न शक्यं तत् कार्यं शुनकेन कृतं, तावदेव । अस्य अर्थः - 'अस्माकं राज्ये सैनिकानां कार्यं शुनकाः एव कुर्वन्तः सन्ति' इति । सैनिकेभ्यः अपि ते एव कर्तव्यपालने दक्षाः सन्ति । अस्यां परिस्थितौ तादृशः शुनकः सम्मानयोग्यः अस्ति । एवम् अकृत्वा तस्य शुनकस्य मारणं कदापि न उचितम्'' इति ।

सेनाध्यक्षः एतत् श्रुत्वा अपमानेन शिरः अवनमितवान्, ततः प्रस्थितश्च ।

ततः आरभ्य तेन देशे तादृशी व्यवस्था कृता, यया सर्वे सैनिकाः स्वकर्तव्ये विशेषावधानवन्तः जाताः ।





## वेताल-कथा

# राजभक्तिः

स्वीकृतं कार्यं परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगत्य मौनेन यथापूर्वं श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''राजन् ! भवतः कार्यश्रद्धा पराक्रमः च प्रशंसनीयः एव । एतदर्थं भवान् निश्चयेन अभिनन्दनार्हः । किन्तु भवति सद्गुणाः यथा सन्ति तथैव लोपाः अपि सन्ति एव । एते लोपाः हानिकारकाः । गुणी, पराक्रमी च सन् अपि भवान् तर्कशक्तिहीनः अस्ति । सर्वे अपि विषयाः तर्कनिकषेण परीक्ष्य अङ्गीकरणीयाः । अन्यथा हानिः निश्चिता । मम तु भासते यत् वीरदत्तः इव भवान् अपि सूक्ष्मपरिशीलनज्ञानहीनः एव इति । वीरदत्तेन सूक्ष्मपरिशीलनम्



अकुर्वता महती हानिः अनुभूता जीवने । भवान् अपि तादृशीं हानिं न अनुभवेत् इत्यतः तस्य कथां विस्तरेण श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा –

पूर्वं केयूरपुरनामके देशे वीरदत्तः नाम कश्चन युवकः वसति स्म । सः सर्वविद्यासु सुनिपुणः । मल्लयुद्धं, धनुर्युद्धं, खड्गयुद्धम् इत्यादिषु तत्समानः कोऽपि न आसीत् । विविधेषु शास्त्रेषु अपि सः पारङ्गतः आसीत् ।

केयूरपुरस्य सेनाध्यक्षः कदाचित् आकस्मिकमरणं प्राप्तवान् । तस्य स्थाने नियोजनाय योग्यस्य जनस्य अन्वेषणम् आरब्धम् । एतदर्थम् एव राजधान्याम् एका स्पर्धा अपि आयोजिता ।

एतस्यां स्पर्धायां भागः वोढव्यः इति वीरदत्तः निश्चितवान् । यदा तदीया इच्छा तत्पित्रा ज्ञाता तदा सः उक्तवान् – ''वत्स ! राजोद्योगः सर्वदा अपि अपायकरः । अल्पस्य लोपस्य निमित्तम् अपि महत् दण्डनं प्राप्तव्यं भवति तत्र । तस्य फलम् अनुभोक्तव्यम् आजीवनम् । सर्पस्य फणायाः अधः विश्रान्ति-स्वीकारस्य इच्छा किमर्थं भवतः ? अत्रैव वसन् कृषिं करोतु । निश्चिन्तजीवनं यापयतु । कुलविद्यायाः त्यागः न श्रेयसे'' इति ।

पितुः कथनं वीरदत्तस्य सम्मतं न आसीत् । अतः सः पितुः वचनम् अनङ्गीकुर्वन् उक्तवान् – ''मया क्षत्रियोचितविद्यायाः अभ्यासार्थं महान् परिश्रमः कृतः अस्ति । उच्चं पदं प्राप्तं चेदेव एतस्य विद्याभ्यासस्य सार्थकता । अतः अहं स्पर्धायां भागं ग्रहीष्यामि एव'' इति । पिता पुत्रं बहुधा बोधितवान् । तथापि वीरदत्तस्य सङ्कल्पः अविचलः एव आसीत् । सः स्पर्धानिमित्तं राजधानीं प्रति प्रस्थितवान् ।

तस्यां स्पर्धायां भागं ग्रहीतुं देशविदेशेभ्यः बहवः शूराः आगताः आसन् । स्पर्धायाः प्रथमे चरणे शारीरकयोग्यता, व्यायामयोगः, क्षात्रविद्यानैपुण्यम् इत्यादयः परीक्षिताः । तासु वीरदत्तः विनायासं जयं प्राप्तवान् । अग्रिम-चरणेषु अपि सः सर्वान् पराजित्य प्रथमस्थानं प्राप्तवान् ।

तदनन्तरं केयूरपुरस्य भौगोलिकराजनैतिक-स्थितिविषये प्रतिवेशिराज्यानां सैन्यबल-नीत्यादीनां विषये च प्रश्नाः कृताः । वीरदत्तः सर्वेषां समुचितम् उत्तरं दत्तवान् । अतः सः चिन्तितवान् यत् सेनाध्यक्षपदव्याः प्राप्तिः सुनिश्चिता इति । यदा तदीयः वासः भव्यभवने

कल्पितः तदा तु सेनाध्यक्षत्वप्राप्तिविषये तस्य सन्देहः एव न अवशिष्टः ।

अनन्तरदिने केयूरपुरस्य महामन्त्री त्रिनाथ-शर्मा तस्य भवनं स्वयम् आगतवान् । सः वीरदत्तस्य शौर्यबुद्धिमत्तादीनां प्रशंसां बहुधा कृत्वा उक्तवान् – ''सेनाध्यक्षपदस्य प्राप्त्यर्थम् अपेक्षिताः शौर्यादियोग्यताः भवति सन्ति एव । देशरक्षणे सेनाध्यक्षस्य स्थानं महत्त्वपूर्णम् । अतः एतस्मिन् स्थाने स्थातुम् इच्छतः परीक्षा इतोऽपि करणीया भवति । एतदर्थं भवता अग्रिमेषु षट्सु मासेषु राजास्थाने कार्यं करणीयम् । एतदवधौ यत् कार्यं दीयते तत् करणीयं भवता । भवते कापि पदवी तु न दीयते । एतस्य अनन्तरम् एव भवान् सेनाध्यक्षः भवितुम् अर्हति'' इति ।

त्रिनाथशर्मणः कथनं सहर्षम् अङ्गीकृतवान् वीरदत्तः । ततः मासद्वये वीरदत्तेन विशेषकार्यं किमपि न कृतम् । तदनन्तरम् एकदा त्रिनाथशर्मा वीरदत्तम् आहूतवान् । वीरदत्तः तदीयं गृहं गतवान् ।

त्रिनाथशर्मा तं सादरं स्वागतीकृत्य उक्तवान् – ''वीरदत्त ! गुप्तचराणां प्रमुखः इदानीम् एकां वार्ताम् आनीतवान् अस्ति । अस्माकं महाराजस्य केयूरसिंहस्य कश्चन अभ्यासः अस्ति । सः प्रतिदिनं राज्ञ्या सह सायम् उद्याने विहरति । एकं दिनम् अपि एतम् अभ्यासं न त्यजति सः । विहारसमये उद्याने कोऽपि न भवेत् इति तस्य नियमः । अङ्गरक्षकाणाम् अपि तत्र स्थातुम् अनुमतिः नास्ति । शत्रवः राज्ञः एकान्तस्थितिरहस्यं कथमपि ज्ञात्वा तस्य संहारार्थं योजनां कृतवन्तः सन्ति इति गुप्तचर-



द्वारा ज्ञायते । अद्य आरभ्य महाराज्ञीमहा-राजयोः रक्षणभारः भवतः । तयोः विहार-समये भवता गुप्ततया उद्याने स्थातव्यम् । भवतः उपस्थितिः राजदम्पतीभ्यां सर्वथा न ज्ञायेत । यदि ताभ्यां ज्ञायेत तर्हि राजा कठोर-दण्डनं कुर्यात् । अतःभवता जागरूकतया भवितव्यम्'' इति ।

वीरदत्तः एतत् कार्यम् अङ्गीकृत्य तस्मिन् उद्युक्तः जातः । सः रहसि तिष्ठन् राजदम्पती अनुसरति स्म । एतत् अनुसरणं राजदम्पतीभ्यां यथा न ज्ञायेत तथा जागरूकतां वहति स्म सः । एवम् एव चत्वारि दिनानि अतीतानि । पञ्चमे दिने पञ्च जनाः हठात् राजानं राज्ञीं च आक्रान्तवन्तः । यावत् राजा केयूरसिंहः स्वकोषात् खड्गम् आकृष्टवान् तावता वीरदत्तः स्वखड्गम् आकृष्य झटिति अग्रे गतवान् । एतत् दृष्ट्वा ते आक्रामकाः भीत्या पलायितवन्तः ।



वीरदत्तः तौ प्रणम्य उक्तवान् यत् एतत् आक्रमणं सम्भाव्यैव गतेभ्यः चतुर्भ्यः दिनेभ्यः मया रहसि भवतोः अनुसरणं क्रियमाणम् आसीत् इति । एतत् श्रुत्वा क्रुद्धः केयुरसिंहः 'वीरदत्तं कारागारे स्थापयन्तु' इति भटान् आहूय आज्ञापितवान् ।

तद्दिने रात्रौ मन्त्री त्रिनाथशर्मा वीरदत्तेन मेलितुं कारागारम् आगतवान् । प्रवृत्तस्य विषये सहानुभूतिं प्रदर्श्य सः उक्तवान् – ''वीरदत्त ! श्वः राजा भवन्तम् आस्थानं प्रति आनायिष्यति । पूर्णायां सभायां भवतः कठोरदण्डनं विधास्यति । राजोद्योगः नाम सर्वदा एवम् एव । भवता या आपत् सम्मुखीक्रियमाणा अस्ति तस्याः परोक्षकारणम् अहम् एव । अतः अहं भवतः साहाय्यं कर्तुम् इच्छामि । इदानीम् एव भवान् इतः निर्गच्छतु । भवन्तं कोऽपि यथा न गृह्णीयात् तथा मया एतावता एव व्यवस्था कृता अस्ति । श्वः महाराजम् अपि यथायोग्यं किमपि उक्त्वा अहं तदीयं कोपं शमयिष्यामि । अतः भवान् इतः निर्गच्छतु'' इति ।

तदा वीरदत्तः अवदत् – ''महामन्त्रिणा भवता यत् उक्तं तत् यथायोग्यं पालितं मया । एतस्य परिणामरूपेण राजा मां दण्डयेत् उत न इत्यत्र मम चिन्ता एव नास्ति । मया कोऽपि अपराधः तु न कृतः । अतः काऽपि भीतिः नास्ति मम । अतः एव इतः पलायनस्य विचारः अपि सर्वथा नास्ति मम मनसि । भवता मयि औदार्यं प्रदर्शितं यत् तदर्थम् अनेके धन्यवादाः'' इति ।

एतत् श्रुत्वा मन्त्री मन्दहासं प्रकटयन् वीरदत्तस्य स्कन्धे सकृत् प्रीत्या हस्तं संस्थाप्य

ततः निर्गतवान् ।

एवं कथां समाप्य वेतालः अवदत् - ''राजन् ! शूरः वीरः च सन् अपि वीरदत्तः महामूर्खः अपि आसीत् इति भाति मम । पितुः उपदेशं तृणीकृत्य राजोद्योगार्थं सः यत् आगतवान् सा एव प्रथममूर्खता तस्य । महामन्त्रिणः कथनं तृणीकृत्य अपरां मूर्खतां प्रदर्शयन् सः कारागारवासे एव मतिं कृतवान् । यस्य राज्ञः प्राणरक्षणार्थं तेन शौर्यं प्रदर्शितं सः एव राजा तं कारागारे स्थापितवान् । तादृशे कृतघ्ने राज्ञि किमर्थं विश्वासः प्रदर्शितः तेन ? राज्ञः दण्डनं स्वीकर्तुं किमर्थं सः मतिं कृतवान् ? किं सः अविवेकी न ? मम एतेषां प्रश्नानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''वीरदत्तः वस्तुतः महावीरः । तस्मिन् मूर्खता लेशमात्रेण अपि नास्ति । तादृशः एव सेनाध्यक्षः भवितुं योग्यः । वीरदत्तः शौर्यस्पर्धासु विजयं प्राप्य स्वस्य योग्यतां निरूपितवान् । किन्तु सेनाध्यक्षपद-प्राप्त्यर्थं शौर्यादिभिः सह अन्ये अपि केचन गुणाः अपेक्षिताः । एतत् त्रिनाथशर्मा वीरदत्तं ज्ञापितवान् । राजदम्पत्योः रक्षणार्थं वीरदत्तः एकाकी सन् एव चतुरः सैनिकान् सम्मुखी-कृतवान् । वीरदत्तः कारागारे स्थापितः यत्, राजा दण्डयिष्यति इति वार्ता प्रसारिता यत् तत्सर्वं राजमन्त्रिणोः योजनायाः अङ्गम् । तौ वीरदत्तस्य राजभक्तिं देशभक्तिं कर्तव्य-परायणतां च परीक्षितुम् इच्छतः स्म । अतः राजदम्पत्योः शान्तेः भङ्गं निमित्तीकृत्य वीर-दत्तः कारागारे स्थापितः । मन्त्री कारागारम् आगत्य - 'भवतः पलायनार्थम् अवकाशः कल्पयिष्यते' इति वदन् तस्मिन् प्रलोभनं जनयितुं प्रयासं कृतवान् । किन्तु वीरदत्तः राजभक्तिं प्रदर्शयन् दण्डनस्वीकरणम् एव स्वागतीकृतवान् । अतः एव मन्त्री प्रीत्या तस्य स्कन्धे हस्तं स्थापितवान् । एतस्य तात्पर्यं यत् वीरदत्तः सर्वासु परीक्षासु उत्तीर्णः सन् सेनाध्यक्षपदस्य अलङ्करणे योग्यः अस्ति इति । एवम् अत्र राज्ञः वीरदत्तस्य वा मूर्खता काऽपि नास्ति'' इति ।

एवं त्रिविक्रमस्य मौनभङ्गं साधयित्वा सन्तुष्टः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् आलम्बितवान् ।



# कथम् आयुधं परमशक्तियुतं जातम् ?



बहुभ्यः वर्षेभ्यः - तन्नाम सहस्रशः वर्षेभ्यः - पूर्वं देवानां दानवानां च परस्परं युद्धं निरन्तरं प्रचलति स्म । युद्धेषु कदाचित् देवानां विजयः भवति स्म, पुनः कदाचित् तद्वैरिणः तेषां निर्मूलनं कुर्वन्ति स्म । उभय-पक्षयोः विजयानां संख्यादृष्ट्या तुलनां कुर्मः चेत् दृश्यते स्म यत् देवानां यावन्तः विजयाः ततोऽपि अधिकविजयाः दानवानाम् एव आसीत् इति ।

दानवेषु बहवः युद्धकुशलाः बुद्धिमन्तः च आसन् । ते बह्वीषु युद्धकलासु प्रवीणाः आसन् । न केवलं तावत्, विज्ञानस्य विविधासु शाखासु अपि ते महत् प्रावीण्यं प्राप्तवन्तः आसन् ।

किन्तु दानवेषु विद्यमानः महान् दोषः नाम तेषां दुरभिमानः दुरहङ्कारः च । आत्मसन्तोषार्थं ते निर्दयाः क्रूराः वा भवितुं सङ्कोचं न अनुभवन्ति स्म । ते शान्तेः, मानवीयतायाः, भगवद्भक्तेः च द्वेषिणः आसन् । ये शान्तेः आराधकाः आसन्, ये च ध्यानादिकार्येषु समर्पितचित्ताः आसन् तान् नितरां द्विषन्ति स्म दानवाः । एतादृशप्रवृत्तिरहिताः तु अङ्गुलिगणनीयाः केचन एव आसन् दानवानां गणे ।

अतः सहजतया ऋषिमुनयः दानवैः पीडिताः भवन्ति स्म । स्वर्गः देवानाम् अधीनः आसीत् इति कारणतः दानवाः देवान् शत्रून् भावयन्ति स्म ।

न केवलं भूमेः उपरि, अपि तु स्वर्गस्य उपरि अपि आधिपत्यं स्थापयितुम् इच्छन्ति

स्म दानवाः। बहुवारं ते स्वर्गात् देवाधिपस्य इन्द्रस्य पलायनं कारितवन्तः आसन् । किन्तु उपायचतुरः इन्द्रः कथञ्चित् विष्णोः शिवस्य ब्रह्मणः च अनुग्रहेण स्वस्थानं पुनः प्राप्तवान् आसीत् ।

अथ कदाचित् वृत्रासुरनामकः कश्चन असुरः स्वस्य महत्त्वाकांक्षया शक्तिसम्पन्नः अभवत् । सः स्वसैन्येन सह कदाचित् पूर्वसूचनां दत्त्वा, कदाचिच्च पूर्वसूचनां विना च स्वर्गस्य उपरि आक्रमणं करोति स्म । तं पराजेतुम् इन्द्रः बहुधा प्रयत्नं कृतवान् । किन्तु सः न शक्तः ।

वृत्रासुरः कञ्चित् वरं प्राप्तवान् आसीत् । तदनुसारं तम् अग्निः दग्धुं नार्हति स्म, जलं निमज्जयितुं न शक्नोति स्म । लोहेन काष्ठेन वा निर्मितं शस्त्रम् अपि तं मारयितुं न शक्नोति स्म ।

''वृत्रासुरात् विमोचनं प्राप्तुम् उपायं सूचयन्तु'' इति इन्द्रः अनेकान् मुनीन् प्रार्थितवान् । बहवः मुनयः एतद्विषये स्वस्य असहायकतां प्रदर्शितवन्तः । अन्ते इन्द्रः ज्ञातवान् यत् इन्द्रपदव्यां भवितुं योग्यः कश्चित् मुनिः स्वजीवनस्य त्यागेन वृत्रासुरस्य मारणे साहाय्यं कर्तुं शक्नोति इति । किन्तु तादृशः मुनिः कुत्र अन्वेष्टव्यः ? तादृशः मुनिः एकः एव आसीत् । सः एव दधीचिमुनिः ।

किन्तु दधीचिमुनेः समीपं गन्तुम् इन्द्रस्य धैर्यं सर्वथा नासीत् । सः इन्द्रपदव्याः प्रतिस्पर्धी आसीत् इत्यतः इन्द्रः पूर्वं तस्य तपसि अनेकान् विघ्नान् कृतवान् आसीत् बहुधा ।

अतः इन्द्रस्य समस्या – कथं वा दधीचिमुनिं



साहाय्यं प्रार्थयेयम् इति ।

'यदि वृत्रासुरः हन्तव्यः तर्हि मम आयुधं शक्तिमत् भवेत् । दधीचिमुनेः अस्थ्नां द्वारा एव मम आयुधं निर्मितं स्यात् । मुनिना देहत्यागः कृतः चेदेव तदीयानि अस्थीनि प्राप्तुं शक्यानि । शत्रवे दधीचिः स्वस्य अस्थीनि दद्यात् इति कथं वा निरीक्षितुं शक्येत ?...' इत्येवं प्रवृत्तम् इन्द्रस्य चिन्तनम् ।

'यदि एतं प्रस्तावम् अहं दधीचिमुनेः पुरतः उपस्थापयेयं तर्हि सः एतस्य श्रवणमात्रेण एव उपहासं कुर्यात् । तदीये तपसि बाधाम् उत्पादितवतः मम साहाय्यं सः किमर्थं कुर्यात् ?' इति अचिन्तयत् इन्द्रः ।

अतः अग्रे किं करणीयम् इति अजानन् इन्द्रः मौनम् आश्रितवान् ।

दानवाः मुनीनां देवानां च पीडनं यथापूर्वम्

अनुवर्तितवन्तः । 'भवदीयानि अस्थीनि ददातु' इति दधीचिं प्रार्थयितुं देवेषु अपि कस्यापि धैर्यं न आसीत् ।' अतः देवाः अपि एतद्विषये मौनम् आश्रितवन्तः ।

तपसि एव मग्नः दधीचिः तु प्रापञ्चिक-व्यवहारे अनासक्तः निर्लिप्तः च आसीत् । तथापि दानवानां दुर्व्यवहाराः तदा तदा तस्य श्रुतिपथम् आगच्छन्ति स्म एव । एतस्य सङ्कटस्य निवारणोपायः कः इति तेन कदाचित् कर्णाकर्णिकया श्रुतम् आसीत् अपि ।

अतः सः स्वस्य शरीरत्यागं सङ्कल्प्य मुनीन् देवान् च निवेदितवान् – ''मम अस्थ्नां दानेन यदि लोकस्य एव उपकारः भवेत् तर्हि अहं तानि ससन्तोषं दातुं सिद्धः अस्मि । तदर्थं यज्ञः व्यवस्थाप्यताम्'' इति । देवाः मुनयः च तथैव कृतवन्तः । ततः दधीचिः समाधौ लीनः सन् तत्रैव स्वस्य शरीरम् अत्यजत् ।

देवाः तदीयानि अस्थीनि स्वीकृत्य इन्द्रस्य आयुधं शक्तियुतं कृतवन्तः । ततः अग्रे यदा वृत्रासुरः पुनरपि दर्पेण आगत्य आक्रमणं कृतवान् तदा इन्द्रवृत्रासुरयोः घोरं युद्धं जातम् । इन्द्रः स्वस्य शक्तियुतेन वज्रायुधेन वृत्रासुरस्य संहारं कृतवान् ।

एवं महात्मा दधीचिः श्रेष्ठस्य उद्देशस्य निमित्तं महान्तं त्यागम् एव कृतवान् । यद्यपि इन्द्रः तद्विषये असौजन्यं वैरं च प्रदर्शितवान् आसीत् तथापि सः तु इन्द्रविषये अल्पं द्वेषमपि न वहति स्म । तावदेव न, दानवानां विषये अपि तस्य वैरभावः न आसीत् । तथापि सः अस्थिदानं यत् कृतवान् तस्य कारणम् आसीत् – देवानाम् ऋषीणां च संरक्षणं, देशे शान्तेः संस्थापनाभिलाषा च । तपसा सः स्वस्य शरीरं पवित्रतमं कृतवान् आसीत् । स्वार्थः लेशमात्रेण अपि न आसीत् तस्मिन् । अतः एव तदीयानि अस्थीनि दृढानि जातानि आसन् ।

अद्यापि लोके उदात्ततायाः त्यागस्य च अद्वितीयम् उदाहरणम् अस्ति सः ।





# गुप्तसम्मानः

कार्तिकः महाधनिकः । अपारा सम्पत्तिः तस्य । कदाचित् तस्य मनसि विचारः आगतः यत् मया प्रसिद्धिः प्राप्तव्या इति । प्रसिद्धिः प्राप्ता चेत् जनानां प्रशंसा प्राप्स्यते इति तस्य चिन्तनम् । एतदर्थं सः कविताः अरचयत्, गीतानि अगायत्, चित्राणि अलिखत्, नृत्याभ्यासम् अपि अकरोत् । ऐन्द्रजालिकविद्यायाः परिचयः अपि प्राप्तः । तथापि प्रसिद्धिः तु न प्राप्ता एव । एतस्मात् तस्य महत् दुःखं जातम् । सः पत्न्याः पुरतः स्वदुःखं प्रकटयन् अवदत् – ''मया किं किं न कृतम् । तथापि साफल्यं न प्राप्तम् । प्रायः मम असामर्थ्यम् एव अत्र कारणम्'' इति ।

तदा पत्नी अवदत् – ''कला अध्ययनात् न प्राप्यते । प्रतिभा यदि स्यात् तर्हि कला-सिद्धिः स्यात् । एतत्सर्वं परित्यज्य भवान् अन्यम् एव मार्गम् आश्रयतु, येन भवता प्रसिद्धिः प्राप्येत । एषु दिनेषु ये कलाकाराणां सम्माननं कुर्वन्ति ते महतीं प्रसिद्धिं प्राप्नुवन्ति । अतः भवान् प्रतिमासम् एकस्य कलाकारस्य सम्माननं करोतु । ततः अचिरात् एव भवता महती प्रसिद्धिः प्राप्स्यते'' इति ।

कार्तिकाय एषा सूचना अरोचत । अतः सः नृत्यकारस्य नटराजस्य गृहं गतवान् । नटराजः सुविख्यातः नृत्यपटुः । यदा कार्तिकेन स्वस्य इच्छा उक्ता तदा नटराजः अवदत् – ''भवतः चिन्तनम् उत्तमम् एव । किन्तु मम विचारः यत् मम सम्माननं यत्र प्रचलेत् तत्र मद्योग्यतायाः ज्ञातारः कलाकाराः बहवः उपस्थिताः स्युः इति । मम सम्माननं किमर्थम् इति तैः तत्र वक्तव्यम्'' इति ।

''महोदय ! भवतः नाम तु देशे सर्वत्र



प्रसिद्धम् । अतः मया भवतः सम्माननविचारः चिन्तितः । एषः विचारः अन्यैः अपि अनुमतः स्यात् इति किमर्थं चिन्त्यते ? सम्मानकर्ता तु अहम् एव'' इति अवदत् कार्तिकः ।

तदा नटराजः अवदत् - ''मम कला-नैपुण्यविषये भवान् सर्वथा अनभिज्ञः। अतः मम सम्माननं कर्तुं योग्यता नास्ति भवतः । ये मम सम्माननं निर्णयन्ति ते नाट्याचार्याः स्युः । योग्यैः निर्णायकैः यदि कस्यचित् सम्माननं निर्णीयते तर्हि एव कलाकारः तं निर्णयम् अङ्गीकुर्यात् । अतः भवान् योग्यस्य निर्णायकस्य चयनं करोतु आदौ'' इति ।

कार्तिकः नाट्यशास्त्रस्य अध्यापकस्य शङ्करस्य समीपं गत्वा विषयं निवेदितवान् । तदा शङ्करः अवदत् - ''निर्णयः एकाकिना न करणीयः एतादृशेषु विषयेषु । निर्णयः सामूहिकः स्यात् । तदा एव तस्य महत्ता । अतः अहम् अन्येषां द्वित्राणां नाट्याचार्याणां नाम वदामि । तान् अपि निर्णायकान् करोतु भवान् । वयं सर्वे सम्भूय निर्णेष्यामः यत् एतस्मिन् वर्षे कस्य सम्माननं करणीयम् इति'' इति ।

तदा कार्तिकः अवदत् - ''महोदय ! सम्मानः कस्य इति तु निर्णीतम् एव । भवतः अङ्गीकारमात्रम् अपेक्ष्यते अत्र । तदस्ति चेत् सर्वं सिद्धप्रायम्'' इति ।

''अहं तु कलाकारः । निर्णायकैः कलाकारैः निर्णीतस्यैव सम्माननं करणीयं भवता । भवता कृतं निर्णयं वयं कथम् अङ्गीकुर्याम ?'' इति अवदत् शङ्करः ।

एतस्मात् निराशः सन् गृहं प्रत्यागतः कार्तिकः प्रवृत्तं सर्वं पत्नीम् उक्तवान् । तदा तस्य पत्नी उक्तवती - ''निर्णायकाः यदा चीयन्ते तदा निर्णयः तेषाम् एव स्यात् इति तु न्यायसम्मतम् । अतः भवान् अपरम् एव मार्गम् आश्रयतु'' इति उक्त्वा तेन किं करणीयम् इति सूचितवती ।

ततः कार्तिकः सम्मानयोग्यान् अन्वेष्टुं स्वयम् उद्युक्तः जातः । महता प्रयत्नेन तेन चत्वारः चिताः । तेषु एकः कविः, अपरः चित्रकारः, अन्यः गायकः, इतरः नर्तकः च । ते सर्वे स्वक्षेत्रे मध्यमस्तरं वहन्ति स्म ।

''भवतः सम्मानतः वयं कीर्तिमन्तः स्याम'' इति कृतज्ञतापूर्वकं ते उक्तवन्तः ।

तदा कार्तिकस्य पत्नी उक्तवती - ''मम पतिः सङ्कोचशीलः । एतस्मात् ख्यातिः भवेत् इति भीतिः तस्य । ख्यातिवर्धनं सः सर्वथा न इच्छति । वयं भवतां पुरतः पक्षद्वयं स्थापयन्तः

स्मः । एकं सार्वजनिकसम्माननम् । तत्र शत-रूप्यकमात्रं दास्यते । अपरं गुप्तसम्माननम् । एतत् अङ्गीकृतं चेत् शताधिकसहस्रं रूप्यकाणि दास्यन्ते । कीदृशम् आवश्यकम् इति भवन्तः एव निर्णयन्तु'' इति ।

अधिकधनप्राप्त्याशया ते चत्वारः अपि गुप्तसम्माननम् एव अङ्गीकृतवन्तः । ततः कार्तिकः तेभ्यः शताधिकसहस्रं रूप्यकाणि दत्तवान् । तेषु एकैकोऽपि कृतज्ञतां समर्पयन् ततः निर्गतवान् ।

एकस्य सप्ताहस्य अनन्तरं रात्रिसमये कार्तिकगृहे द्वारशब्दः श्रुतः । कार्तिकः गत्वा द्वारम् उद्घाटितवान् । तत्र उपस्थितः आसीत् स्वयं नटराजः एव । तं दृष्ट्वा कार्तिकः आश्चर्यचकितः ।

नटराजः मन्दस्वरेण अवदत् - ''मम नृत्यस्य प्रशंसाकर्तारः सन्ति बहवः । किन्तु मम कष्टकाले साहाय्यदाता नास्ति कोऽपि । इदानीं मम आर्थिकस्थितिः नितरां शोचनीया अस्ति । अपात्रात् सम्माननं प्राप्तं चेत् अपकीर्तिः इति मम भयम् आसीत् । अतः भवतः सम्माननं निराकृतं मया । नाट्य-शास्त्रज्ञाः निर्णायकरूपेण आगत्य मम सम्माननर्णयं कुर्वन्तु इति मया तदर्थम् एव उक्तम् । मया ज्ञातं यत् भवान् कलाकारान् गुप्ततया सम्मानयति इति । तादृशं सम्मानं स्वीकर्तुम् अहं सिद्धः अस्मि । सहस्राधिकानि रूप्यकाणि प्राप्तानि चेत् मम बहूनि कष्टानि अपगतानि भवेयुः'' इति ।

तदा कार्तिकः तस्य पादौ स्पृष्ट्वा नमस्कुर्वन् - ''मम व्यवहारः कीदृशः स्यात् इति बोधितं भवता । स्वप्रसिद्ध्यर्थम् अन्यस्य सम्मननं न श्रेयसे । कलाकाराणां प्रोत्साहार्थं साहाय्यार्थं च मया इतःपरं सम्मानः करिष्यते'' इति उक्त्वा नटराजाय यावदावश्यकं तावत् धनं दत्तवान् ।



# वाग्विदग्धः तेनालिरामलिङ्गः



एकदा कृष्णदेवरायः चिन्ताक्रान्तः दृष्टः । मन्त्रिणः तस्य चिन्तायाः कारणं पृष्टवन्तः । तदा राजा दीर्घं निश्वस्य उक्तवान् - ''मम माता मरणसमये आम्रम् इष्टवती । स च कालः आम्राणां न आसीत् । अतः मम मातुः इच्छा न पूर्णा । इच्छापूर्तिम् अप्राप्य एव मम माता दिवं गता । महाराजः सन्नपि अहं मातुः एकां लघुम् इच्छां पूरयितुं न शक्तः यत् तत् मयि महान्तं खेदं जनयति'' इति ।



''प्रभो ! अल्पस्य एतस्य विषये किमर्थं महती चिन्ता ? सुवर्णेन पञ्च आम्राणि निर्माय पण्डितेभ्यः ददातु । एतेन स्वर्गीयमातुः इच्छा पूरिता भविष्यति । तस्याः आत्मा तृप्तः भविष्यति'' इति उक्तवन्तः पण्डिताः ।



एतेन राज्ञः मनसः चिन्ता अपगता । मातुः आत्मनः शान्त्यै पण्डितैः उक्तः उपायः योग्यः अस्ति इति तस्य मनसि अभासत । ततः पण्डितैः सूचिते शुभे दिने राजा पञ्च सुवर्णमयानि आम्राणि पण्डितेभ्यः दानरूपेण दत्तवान् । पण्डिताः तानि स्वीकृत्य राजानम् आशीर्वादेन अनुगृहीतवन्तः ।



तेनालिरामलिङ्गः सर्वं परिशीलयन् आसीत् । सर्वस्य समाप्तेः अनन्तरं सः पण्डितान् उक्तवान् - ''मम मातुः अपि काचित् इच्छा आसीत् । ताम् अहं पूरयितुं न शक्तः । इच्छापूर्तिम् अप्राप्य एव सा मरणं प्राप्तवती । अतः अग्रिमायाम् अमावास्यायां यदि भवन्तः मम गृहम् आगमिष्यन्ति तर्हि अहं दानं करिष्यामि, मम कर्तव्यं च निर्वक्ष्यामि'' इति ।



अमावास्यादिने पण्डिताः रामलिङ्गस्य गृहं गतवन्तः । रामलिङ्गः श्रद्धापूर्वकं मात्रे तर्पणादिकं समर्पितवान् । ततः पण्डितान् सः उक्तवान् – ''भवन्तः एकैकशः अन्तः आगच्छन्तु'' इति । एतदनुसारं पण्डिताः एकैकशः गृहस्य अन्तः गतवन्तः । प्रत्यागमनसमये ते एकं हस्तं वस्त्रेण आवृतवन्तः आसन् । एकैकस्यापि मुखं गम्भीरं वेदनामिश्रितं च आसीत् ।



ते ततः राज्ञः समीपं गतवन्तः । ते स्वस्य हस्तं राज्ञे प्रदर्श्य – ''एतस्य कारणं रामलिङ्गः । अतः एतदर्थं तं यथायोग्यं दण्डयतु'' इति प्रार्थितवन्तः ।



राजा रामलिङ्गम् आनायितवान् । आगतं तं दृष्ट्वा राजा क्रोधेन अपृच्छत् – ''पण्डितान् स्वगृहम् आहूतवान् भवान् । दानं क्रियते इति उक्तम् अपि आसीत् भवता । दानं तु न कृतं, प्रत्युत तप्तशलाकया तेषां हस्तस्य दाहः कृतः । किम् एतत् उचितम् ?'' इति ।

तदा रामलिङ्गः अवदत् – ''महाराज ! मम मातुः शरीरं पामरोगेण पीडितम् आसीत् । तप्तशलाकादाहेन स च रोगः अपगमिष्यति इति वैद्येन उक्तम् आसीत् । तां चिकित्साम् अप्राप्य एव सा दिवं गता । तस्याः इच्छायाः पूरणाय मया एवं कृतम् । यदि सुवर्णाम्रप्रदानेन भवतः मातुः आत्मा तृप्तः स्यात् तर्हि तप्तशलाकादाहेन मम मातुः आत्मा किं तृप्तः न भवेत् ? तस्याः आत्मनः तृप्त्यै मया एवं कृतम्'' इति ।



# बुद्धिमत्ता परीक्ष्यताम्

रसप्रश्नावल्याम् अस्मिन् मासे अपरा एव रीतिः आश्रिता अस्ति । उत्तराणि एकस्मिन् कागदे लिखन्तु । अग्रिममासे यदा समीचीनोत्तराणि प्रकाशयिष्यन्ते तदा स्वकीयानि परिष्कुर्वन्तु ।

१. एतासु कस्याश्चन नद्याः उपनद्यः - सलेरी, प्रह्निता, इन्द्रावती च । सा नदी का ?
अ. कृष्णा आ. गोदावरी इ. कावेरी ई. साबरमती

२. चण्डीघड् पञ्जाब-हरियाणराज्ययोः राजधानी । तयोः राज्ययोः पूर्वतनराजधानी का आसीत् ?
अ. जलन्धर आ. लुधियाना इ. अमृतसरः ई. शिम्ला

३. स्वातन्त्र्यात् पूर्वं ब्रिटिश्शासनेन किं नगरं ग्रीष्मकालीनराजधानीत्वेन परिगणितम् आसीत् ?
अ. श्रीनगरम् आ. शिम्ला इ. डेहराडून् ई. दालहौसी

४. भारतस्य राष्ट्रियवृक्षः कः ?
अ. निम्बः आ. आम्रम् इ. वटः ई. अश्वत्थः

५. बम्बू कस्यां वृक्षजातौ अन्तर्भवति ?
अ. वृक्षः आ. लता इ. फर्न्जातिः ई. तृणम्

६. 'बाटिक्' कीदृशी कला ?
अ. वस्त्रवयनकला आ. व्यक्तिचित्रस्य आलेखनम्
इ. वर्णयोजनप्रकारः ई. शिल्पकला

७. बेङ्गलूरुनगरं भारतस्य 'सिलिकान् व्यालि' इति उच्यते, भारतस्य 'स्टील्सिटि' किम् ?
अ. सेलम् आ. रूरकेला इ. जमशेट्पुरम् ई. भिलायी

*(उत्तराणि अग्रिमे मासे)*

### *'जून्'मासस्य प्रश्नानाम् उत्तराणि*

*१. अरावली इति ।*
*२. कावेरीनद्याः मध्ये ।*
*३. महानदी इति ।*
*४. केरलराज्ये ।*
*५. गेट्टेग्रामः ।*
*६. वेम्बनाड्सरोवरेण ।*
*७. महाबलेश्वरम् ।*
*८. शरावतीनद्या ।*
*९. नवलसागरम् इति ।*
*१०. बण्डेलास् इति ।*



# व्यवहारः प्रमाणम्

प्राचीनकालीना घटना एषा । कस्मिंश्चित् महानगरे सोमनाथः नाम कश्चन धनिकः वसति स्म । चिरकालानन्तरं तेन एकः पुत्रः प्राप्तः । अतः महता प्रेम्णा तं पोषितवान् सः । लालनकारणतः तस्य बालस्य विवेकः न प्रवृद्धः । सः अहङ्कारी सञ्जातः ।

सोमनाथः पुत्रस्य स्वभावादिकं सुसूक्ष्मं परिशीलयति स्म । यदा पुत्रः विवाहयोग्यः जातः तदा सः निश्चितवान् यत् एतस्य स्वभावस्य परिष्कारार्थं करणीयस्य प्रयत्नस्य विषये इतोऽपि विलम्बः न करणीयः मया इति ।

अतः सः एकदा पुत्रम् आहूय अवदत् - ''पुत्र ! भवान् इदानीं प्राप्तवयस्कः अस्ति । अतः अचिरात् एव भवतः विवाहः निर्वर्तनीयः इति मम इच्छा । एतदवसरे अहं भवन्तं कञ्चित् विषयं वक्तुम् इच्छामि । कोदण्डपाणिः बलरामः चेति उभौ मम सुहृदौ स्तः । एषु दिनेषु परस्परगृहं प्रति गमनागमनं न प्रवर्तते । तौ उभौ अपि धनिकौ आस्ताम् । किन्तु इदानीं मया श्रुतं यत् तयोः धनिकत्वं नष्टम् अस्ति इति । वाणिज्यक्षेत्रे एतत्सर्वं सहजम् । तयोः उभयोः अपि एकैका पुत्री अस्ति । ते उभे अपि विवाहयोग्ये । तयोः या भवता इष्टा भवेत् सा परिणेतव्या । एवं मया तयोः कृते वचनं दत्तम् अस्ति । अतः आवां ते उभे पश्याव । या रोचते तां भवान् परिणयतु'' इति ।

''भवता पूर्वं यत् वचनं दत्तं तदनुगुणं मया किमर्थं व्यवहर्तव्यम् ? अहं तयोः गृहं गन्तुं न इच्छामि'' इति असन्तोषमिश्रितस्वरेण उक्तवान् पुत्रः ।



सोमनाथस्य वेषभूषणादिकं दृष्ट्वा एव सः गृहस्वामी अवगतवान् यत् एषः कश्चन धनिकः इति । सः आदरेण अवदत् – ''कोदण्डपाणेः गृहं प्रति गन्तव्यं तत्रभवता ? एषोऽहं दर्शयिष्यामि'' इति ।

''तस्य पुत्री स्नुषात्वेन स्वीकरणीया इति इच्छा । एषः मम एकमात्रपुत्रः तां द्रष्टुम् इच्छति'' इति अवदत् सोमनाथः ।

एतत् श्रुत्वा महान्तं हर्षं प्रदर्शयन् सः गृहस्वामी – ''महतः सन्तोषस्य विषयः । अन्तः आगच्छन्तु । क्षणं यावत् विश्रम्य गच्छाम'' इति उक्त्वा तौ अनुरोधपूर्वकं स्वगृहं नीतवान् । तौ आसन्दे उपवेश्य पाकशालां गत्वा लवणादिमिश्रितं तक्रम् आनीय दत्त्वा अवदत् – ''एतत् पीयताम् । यात्राश्रमं निवारयति एतत्'' इति ।

अत्रान्तरे गृहस्वामिनः वृद्धा माता बहिः आगत्य सोमनाथं नमस्कृत्य – ''अस्माकं कोदण्डपाणेः पुत्र्याः लक्ष्म्याः पाणिग्रहण-सौभाग्यं प्राप्तवान् भाग्यशाली कः इति ज्ञातुम् अहम् आगता । लक्ष्मीः तु साक्षात् लक्ष्मीदेवी एव । गुणानां खनी, सहनामूर्तिः, सौन्दर्यराशिः च । सा यत् गृहं प्रवेक्ष्यति तत् सौभाग्यनिलयः भविष्यति । एतादृशी कन्या लोके सर्वथा दुर्लभा एव'' इति ।

सोमनाथः पुत्रस्य मुखं दृष्टवान् । एतादृशानां वचनानां प्रभावः पुत्रे कीदृशः भविष्यति इति सः ज्ञातुम् इच्छति स्म । एवमेव वार्तालापेन अर्धघण्टा अतीता । तदा गृहस्वामी तन्माता च अनुरोधपूर्वकम् उक्तवन्तौ – ''कोदण्डपाणिः अस्माकम् अपि दूरबन्धुः

''वत्स ! किम् एतत् उच्यते भवता ? दत्तं वचनं मया न पाल्यते चेत् जनाः मां निन्देयुः । मम अपख्यातिः स्यात् । तदा अहं नगरे मुखम् उन्नीय गन्तुं न शक्नुयाम्'' इति अवदत् सोमनाथः ।

यद्यपि पितुः वचनस्य पालने पुत्रस्य पूर्णः अङ्गीकारः न आसीत् तथापि अनन्य-गतिकतया सः पित्रा सह गमनम् अङ्गी-कृतवान् ।

अनन्तरदिने शकटम् आरुह्य तौ प्रस्थितौ । आदौ तौ कोदण्डपाणेः वसतिप्रदेशं चक्रधरपुरं गतवन्तौ । चक्रधरपुरप्राप्तिसमये मध्याह्नः जातः आसीत् । तीव्रः आतपः बाधते स्म । एकस्य सामान्यगृहस्य पुरतः शकटं स्थगयित्वा सोमनाथः गृहस्वामिनम् आहूय पृष्टवान् – ''अत्र कोदण्डपाणेः गृहं कुत्र ?'' इति ।

एव । इदानीं भोजनं करवाम । अनन्तरं तद् गृहं गच्छाम'' इति ।

अनुरोधं निराकर्तुम् अशक्नुवन्तौ सोमनाथः तत्पुत्रः तत्र भोजनं कृतवन्तौ । भोजनं स्वादुपूर्णम् आसीत् ।

कोदण्डपाणेः पुत्र्याः दर्शनार्थं सोमनाथः तत्पुत्रः च आगतौ इति वार्ता ग्रामीणैः अपि ज्ञाता । ते सर्वे सोमनाथेन मेलितुम् आगताः । ततः ते सर्वे सम्भूय कोदण्डपाणिगृहं गतवन्तः । कोदण्डपाणेः गृहं लघु आसीत् । किन्तु स्वच्छं सुन्दरं च आसीत् । मित्रं दृष्टवतः कोदण्डपाणेः महान् आनन्दः । 'भोजनादिसत्कारः ग्रामीणैः एव कृतः इति विषयः तस्य अल्पखेदाय जातः । 'एतत् भाग्यं मया न प्राप्तं खलु' इति सः खिन्नः । ततः लक्ष्म्याः दर्शनं, तया सह वार्तालापश्च जातः । ग्रामीणैः यत् उक्तं तत्र उत्प्रेक्षांशः नास्ति इति सोमनाथेन तत्पुत्रेण च ज्ञातम् ।

सोमनाथः घण्टां यावत् तत्र स्थितवान् । अनन्तरं पुत्रेण सह अनन्तपुरं गतवान्, यत्र च बलरामः निवसति स्म । यदा तौ तं ग्रामं प्राप्तवन्तौ तदा अन्धकारप्रसारस्य आरम्भः जातः आसीत् । कोदण्डपाणेः गृहविषये यथा तथैव बलरामस्य गृहविषये अपि जनाः पृष्टाः सोमनाथेन ।

बलरामस्य नाम श्रुत्वा एव कश्चित् - ''बलरामस्य गृहं प्रति गन्तव्यम् ? तत् इन्द्रभवनम् इतः केषाञ्चित् मार्गाणाम् अतिक्रमणस्य अनन्तरं प्राप्यते । केन उद्देशेन तं महानुभावं द्रष्टुम् इच्छति भवान् इति किमहं ज्ञातुं शक्नोमि ?'' इति उपहासमिश्रितेन स्वरेण पृष्टवान् ।



यदा सोमनाथः आगमनोद्देशम् उक्तवान् तदा सः ग्रामीणः - ''तस्य गृहस्य सम्बन्धः इष्यते ? योग्यं स्थानं तत् । गच्छन्तु, महान् सत्कारः प्राप्येत तत्र'' इति सोपहासम् उक्त्वा ततः निर्गतवान् ।

ततः सोमनाथः अन्यान् द्वित्रान् जनान् पृष्टवान् । किन्तु कोऽपि बलरामगृहविषये समीचीनं विवरणं न दत्तवान् । एकैकोऽपि बलरामविषये निन्दावचनानि वदति स्म । कोऽपि सोमनाथेन सह आदरपूर्वकव्यवहारम् अपि न कृतवान् ।

अन्ते दीर्घं निश्श्वस्य सोमनाथः पुत्रम् उक्तवान् - ''कोदण्डपाणिः शान्तः विनम्रः च । यदा सः धनिकः आसीत् तदा अपि सः एवम् एव आसीत् । एतस्य सद्व्यवहारस्य कारणतः एव जनाः अद्यापि तद्विषये आदरं प्रकटयन्ति । यद्यपि अद्य सः निर्धनतां गतः अस्ति तथापि तस्य पुत्रीम् एव भवान् परिणयतु इति जनानाम् इच्छा । लक्ष्मीः तु पिता इव एव सद्गुणसम्पन्ना सौम्या च । किन्तु बलरामः अहङ्कारी आसीत् । यदा धनम् आसीत् तदा सः गर्वेण व्यवहरति स्म । जनानाम् अपमाननं करोति स्म । कस्यापि साहाय्यं न करोति स्म । इदानीं दैवेन तस्य सम्पत्तिः अपहृता अस्ति । अतः जनाः तस्य विषये अनादरं प्रकटयन्ति । तस्य साहाय्यं कर्तुं न इच्छन्ति । कोऽपि तस्य असहाय-स्थितौ साहाय्यं न करोति । भवाता एव दृष्टं खलु कोऽपि तस्य गृहस्य प्रदर्शने अपि आसक्तः नास्ति इति । इतःपरम् अस्माभिः एव कष्टेन तस्य गृहम् अन्वेष्टव्यम्'' इति ।

एतत् श्रुत्वा पुत्रः उक्तवान् - ''बलरामस्य गृहस्य अन्वेषणस्य आवश्यकता काऽपि नास्ति । अहं कोदण्डपाणेः पुत्रीम् एव परिणेष्यामि । यदि भवता बलरामः द्रष्टव्यः एव तर्हि पुनः कदाचित् एकाकितया आगत्य भवान् द्रष्टुम् अर्हति । इदानीं तु गृहं प्रतिगच्छाम तावत्'' इति ।

पुत्रस्य एतत् वचनं सोमनाथस्य सन्तोषाय जातम् । किं युक्तं, किम् अयुक्तम्, कथं व्यवहरणीयं, कथं न व्यवहरणीयम् इत्यादिकं ज्ञातवान् आसीत् पुत्रः । 'यत् मया ज्ञापनीयम् आसीत् तदेव अवगतम् अस्ति एतेन' इति चिन्तयित्वा सोमनाथः - ''अस्तु । यथा भवान् वदति तथैव भवतु'' इति उक्त्वा 'शकटं ग्रामं प्रति नयतु' इति सारथिम् आदिष्टवान् ।






# ऐश्वर्यशोभारहस्यम्



भारतीयान् राज्ञः राज्ञीः च यदा पश्यामः तदा भासते खलु - 'अहो, एतेषां शोभा !' इति ? वस्तुतः तेषां रूपं बुद्धिमत्ता वा विशिष्टं भवति इति न । तेषु अपि सामान्या रूपबुद्धिमत्तादियुक्तता अस्ति एव । किन्तु ते यानि आभूषणानि धरन्ति तानि तेषां तादृशीं शोभां परिकल्पयन्ति । राजवंशीयैः अपूर्वाणि आभूषणानि यत् प्राप्यन्ते तस्य मूलकारणीभूतः अस्ति 'अर्थशास्त्र'स्य प्रणेता चाणक्यः । सः तृतीये क्रिस्तशके जातः । सः लिखति यत् सर्वे राजानः खनिजद्रव्यसम्पदः विषये अवधानवन्तः स्युः, राज्ये तेषाम् उत्पादनादिकं सुनियन्त्रितं च स्यात् इति । सर्वे राजानः तस्य वचनं प्रायः पालितवन्तः इति भाति । ते नियमं कृतवन्तः यत् उत्तमानि वस्त्राणि, रत्नानि, सुवर्णाभरणानि च कोषागारं प्रति दातव्यानि इति ।

## अस्सामीयः विशिष्टः नृत्यप्रकारः



नृत्यप्रकाराणां विषये यदा कश्चित् चिन्तयति तदा कानिचन नामानि प्रथमम् आयान्ति । तानि च – भरतनाट्यम्, ओडिस्सि, कूचिपुडि, कथक्कली चेति । तादृशः अन्यः अपि कश्चन प्रकारः अस्ति । स च 'सत्रिया' इति । एषः तु अस्सांराज्ये जातः, अल्पजनैः एव ज्ञातः कश्चन नृत्यरूपकप्रकारः । एषः शङ्करदेवेन सृष्टः इति श्रूयते, यश्च १५ शतके तत्प्रदेशे जीवितः कश्चन प्रसिद्धः वैष्णवसंन्यासी अस्ति । सत्रिया पूर्वं पुरुषैः एव अभिनीयते स्म । एषु दिनेषु महिलाभिः अपि सः अभिनीयमानः दृश्यते । कथक्कल्यामिव अस्मिन्नपि नृत्यप्रकारे दृश्यानि न विभक्तानि । सूत्रकारस्य निरूपकस्य वा निरन्तरकथनेन कथाभागः नैरन्तर्येण अनुवर्तते ।

# अस्सामीया जानपदकथा

अस्सांराज्यम् ईशान्यीयराज्यानां प्रवेशद्वारम् इव अस्ति । 'रक्तनद्याः नीलपर्वतानां च राज्यम्' इति तस्य ख्यातिः अस्ति । 'रक्तनदी'पदेन ब्रह्मपुत्रनदः निर्दिश्यते । 'नीलपर्वत'पदेन एतस्मिन् राज्ये विलसतां पर्वतानां निर्देशः क्रियते ।

अस्सांराज्यस्य उत्तरभागे अरुणाचलप्रदेशभूतानौ स्तः । पूर्वभागे नागाल्याण्ड्, मणिपुरं, बर्मा च सन्ति । दक्षिणभागे त्रिपुरामिझोरां-बाङ्ग्लादेशाः सन्ति । पश्चिमभागे अस्ति पश्चिमवङ्गराज्यम् ।

संस्कृतस्य 'असम'पदात् 'अस्साम्' इति पदं निष्पन्नम् इति भाषाशास्त्रज्ञाः वदन्ति । यस्य समं = सदृशं नास्ति तत् भवति असमम् । अत्र ये सस्यसम्पत्-पर्वत-नद्यादयः सन्ति तेषां कारणतः एतस्य तादृशं नाम जातं स्यात् । अन्ये केचन वदन्ति - ''पर्वतीयजातिसूचकस्य 'असोम'पदस्य आंग्लीयोच्चारणतः 'अस्सां'पदं निर्मितम्'' इति । असोमवंशीयाः षट्शताधिकवर्षाणि यावत् एतं प्रदेशं शासितवन्तः ।

एतस्य राज्यस्य विस्तारः ७८,५२३ चतुरस्रकिलोमीटरात्मकः । जनसंख्या च २,६६,३८,४०७ मिता । एतस्य राजधानी दीसपुरम् । शासकीयभाषे स्तः - अस्सामीस् बङ्गाली च ।

# तेजोमाला

ब्रह्मपुत्रनदस्य तीरे जयन्तीयपर्वतश्रेण्याः मूले भृगुः नाम कश्चन धनिकः वणिक् निवसति स्म । तस्य पुत्री तेजोमाला । सा परमसुन्दरी । सा यदा अल्पवयस्का आसीत् तदा एव तदीया माता दिवं गता । तस्याः पिता काञ्चनानामिकाम् अपरां परिणीतवान् । असूयावती सा तेजोमालायाः विषये क्रूरव्यवहारं दर्शयति स्म ।

तेजोमालायाः स्वभावः उत्तमः । सा कदापि विमातुः आदेशं न तिरस्करोति स्म । विमात्रा आदिष्टानि सर्वाणि गृहकार्याणि सा करोति स्म । गृहस्य स्वच्छता, पात्राणां मार्जनं, वस्त्राणां



प्रक्षालनम्, अरण्यतः काष्ठानाम् आनयनं, नदीतः जलस्य आहरणम् इत्यादीनि बहूनि कार्याणि तया प्रतिदिनं करणीयानि भवन्ति स्म । एतत्सर्वं कृत्वा अपि तया विमातुः निन्दनं ताडनं च प्राप्यते स्म ।

भृगुः वाणिज्यकारणतः दूरदेशान् गच्छति स्म पौनःपुन्येन । पितुः अनुपस्थितौ काञ्चनायाः पीडा पराकाष्ठां गच्छति स्म । दैनन्दिनकार्येण सह विशेषकार्याणि अपि आदिशति स्म सा । पाकः करणीयः भवति स्म तेजोमालया । विपणितः भारवन्ति वस्तूनि अपि आनेतव्यानि भवन्ति स्म । क्वचित् विमाता तां ग्रामात् बहिः स्थितं स्वस्य अनुजस्य क्षेत्रं प्रति कार्यार्थम् अपि प्रेषयति स्म ।

एतत्सर्वं कृतं चेदपि तेजोमालया प्राप्यते स्म दिने एकमेव भोजनम् । भोजनम् अपि न पुष्टिदायकम् । जलमयीं यवागूं, लवणं,



मरीचिकां च ददाति स्म विमाता ।

निरन्तरकार्यकरणतः वस्त्राणि मलिनानि छिन्नानि च भवन्ति स्म तेजोमालायाः । तेषाम् एव पुनः पुनः सीवनं कृत्वा धरणीयं भवति

# चायवाटिकाः



अस्सांशब्दश्रवणात् वयम् अस्सांचायं झटिति स्मरामः खलु । प्रपञ्चे एव अत्यधिक-प्रमाणेन चायम् उत्पादयत् राज्यम् अस्ति अस्साम् । भारते यत् चायोत्पादनं भवति तस्य अर्धादधिकभागः अस्सांराज्ये एव उत्पाद्यते ।

जगतः प्रथमा चायोत्पादिका संस्था 'दि अस्सां कम्पनी' नामिका, अस्सांराज्ये एव आरब्धा । एषा संस्था द्वारकानाथठागोरवर्येण १८३९ तमवर्षस्य फेब्रवरीमासस्य १२ दिनाङ्के आरब्धा । द्वारकानाथवर्यः नोबेल्प्रशस्तिभाजः रवीन्द्रनाथठागोरस्य पितामहः । अस्सांचायं स्वस्य शुभ्रवर्णेन सौगन्ध्येन च जगत्प्रसिद्धं जातम् अस्ति ।

अद्य ब्रह्मपुत्रखाते २,३०,००० हेक्टेर्-परिमिते प्रदेशे चायवाटिकाः विराजन्ते । गवाहटीनगरे अत्यधिकप्रमाणेन चायस्य विक्रयणं प्रचलति ।

स्म तया । यदा पितुः प्रत्यागमनं सम्भाव्यते तदा असुन्दरं कठिनं वस्त्रयुगलं तया प्राप्यते स्म ।

यदा इच्छा तदा सर्वदा कमपि दोषम् उद्भावयन्ती ताडयति स्म विमाता । किन्तु तेजोमाला सर्वं विना प्रतिवचनं सहते स्म । विमातुः विरोधेन कमपि एकं वचनम् अपि न वदति स्म सा ।

दिनानि गतानि । तेजोमाला सुन्दरी तरुणी जाता । अचिरात् एव पुत्र्याः विवाहस्य निर्वर्तनं वरम् इति भृगुः अचिन्तयत् । अतः सः योग्यस्य वरस्य अन्वेषणे उद्युक्तः जातः । यदा काञ्चनया एषा वार्ता ज्ञाता तदा सा अस्वस्थचित्ता जाता । 'यदि तेजोमाला परिणीता सती गृहात् गच्छेत् तर्हि तया क्रियमाणानि कार्याणि सर्वाणि मया करणीयानि भवेयुः' इति तस्याः चिन्तनम् । सा जानाति स्म यत् यदि अहम् एतस्याः विवाहस्य विषये अपस्वरम् उत्थापयेयं तर्हि मम पतिः मां सम्यक् दण्डयिष्यति इति । पतिः पुत्र्याः विषये विशेषप्रीतिमान् इति सा जानाति स्म । अतः सा स्वमनसि स्थितं विचारं कुत्रापि न प्रकटितवती एव ।

भृगुः वरस्य अन्वेषणार्थं सर्वत्र अटितवान् । एकः सुन्दरः बुद्धिमान् तरुणः तेन चितः । वरस्य मातापितरौ एतं सम्बन्धं ससन्तोषम् अङ्गीकृतवन्तौ । पत्युः मुखात् यदा एषा वार्ता काञ्चनया ज्ञाता तदा तस्याः ईर्ष्या नितरां प्रवृद्धा । 'तेजोमाला पतिगृहे राज्ञी इव सुखेन स्थास्यति । मया च अत्र दास्या इव पात्र-प्रक्षालनपाकादिकं करणीयम् । कीदृशं दौर्भाग्यं मम' इति अचिन्तयत् सा ।

भृगुः जामातुः अभिवृद्धये विशेषयोजनां

## हस्तकौशलकला

अस्सामीयानां कुलवृत्तिः अस्ति वस्त्र-वयनम् । कार्पासः मुगाकौशेयं, पाटकौशेयम्, एर्निकौशेयम् इत्यादिभिः ते वस्त्रादीनि निर्मान्ति । मुगाकौशेयं, शुभ्रकान्त्या सुवर्णवर्णेन च शोभते । प्रतिप्रक्षालनं तस्य कान्तिः वर्धते । एर्निकौशेयं शैत्यनिवारकम् । अतः शीतकाले एतत् अतीव उपयोगकरं भवति ।

वेणुभिः वस्तुनिर्माणम् अपि असमराज्ये आधिक्येन प्रचलति । गृहोपयोगिवस्तूनां निर्माणाय वेणवः उपयुज्यन्ते । चालनी, शूर्पः, कण्डोलः इत्यादयः निर्मीयन्ते तैः वेणुना । क्षेत्रेषु कार्यकरणावसरे ते वेणुनिर्मितं शिरस्त्रं



धरन्ति । तत् विविधैः वर्णैः चित्रैः च सुशोभितं भवति ।



कृतवान् । 'मम जामाता मत्तः अपि समर्थतरः स्यात् । वाणिज्यविषये तस्य ज्ञानं वर्धेत । तदा एव सः योग्यः जामाता भवितुम् अर्हति' इति चिन्तयन् सः निर्णीतवान् यत् विवाहात् पूर्वम् एषः दूरप्रवासार्थं नेतव्यः इति । ततः तौ गृहात् निर्गतवन्तौ । बहूनि नगराणि, बहवः देशाश्च तैः दृष्टाः ।

अत्र ग्रामे विमाता तेजामालायाः उत्कृष्टं भविष्यं सर्वथा न असहत । 'केनापि उपायेन एतत् मया नाशनीयम् एव' इति सा सङ्कल्पम् अकरोत् ।

एकदा सा तेजोमालाम् आदिष्टवती - 'रे, व्रीहीणाम् अवहननं करोतु' इति । मुग्धा तेजोमाला मुसलं स्वीकृत्य अवहननं कुर्वती तुषान् अपनयन्ती स्थितवती । तदा पृष्ठभागतः विना शब्दम् आगता विमाता अपरेण मुसलेन तेजोमालां शिरसि बलात् प्रहृतवती । एतस्मात् तत्रैव पतिता तेजोमाला प्राणैः वियुक्ता जाता ।

## तैलपरिष्करणकेन्द्रम्

ऊर्ध्वस्तरीयास्सांप्रदेशे स्थिते दिग्बोयीनगरे एशियाखण्डीयं प्रथमं तैलपरिष्करण-यन्त्रागारम् अस्ति । एतत् अस्माकं देशे तैलोद्यमस्य अभिवृद्धेः कारणं जातम् । १८६७ तमे वर्षे अत्र अपरिष्कृततैलं प्राप्तम् । ततः अष्टवर्षेभ्यः पूर्वं पेन्सिल्वेनियाप्रदेशे तैलनिक्षेपः प्राप्तः आसीत् । दिग्बोयीनगरे तैलस्य सद्भावं प्रकाशितवन्तः न मानवाः, अपि तु गजाः !!

दिब्रू-सदियारैलमार्गस्य निर्माणकार्ये नियुक्तः कश्चन गजः कदाचित् अरण्यं गत्वा प्रत्यागतः । एवं प्रत्यागमनसमये तस्य पादाः तैलेन लिप्ताः आसन् । एतस्मात् ज्ञातं यत् तत्र तैलप्राप्तिः सम्भवति इति । शतवर्षाणाम् अनन्तरम् अद्य दिग्बोयीस्थं तैलपरिष्कारकेन्द्रं भारतस्य अतिप्राचीनं केन्द्रम् अस्ति ।

तेजोमाला मरणं प्राप्तवती इति दृढीकृत्य विमाता उच्चैः आक्रन्दनं कृतवती । प्रतिवेशिनः धावन्तः आगताः । 'किं प्रवृत्तम् ?' इति काश्चनां पृष्टवन्तः ते ।

तदा विमाता कृत्रिमाश्रूणि स्रावयन्ती - ''हा हन्त ! किमहं करवाणि ? कथं वा जीवानि ? मम प्रियपुत्री प्राणैः वियुक्ता जाता । एतस्याः विवाहः निश्चितः आसीत् । तदभ्यन्तरे एव एषा दुर्घटना ! अहो, दुर्विधिः !!'' इति वदन्ती सकरुणं रोदनं कृतवती । एतत् आकस्मिकं मरणम् इति प्रतिवेशिषु भावं जनितवती सा । प्रतिवेशिनः अनुकम्पं प्रदर्श-

# काझीरङ्गराष्ट्रियारण्यम्



एतत् अस्सांराज्यस्य मध्यभागे ६८८ चतुरस्रकिलोमीटरात्मके प्रदेशे प्रसृतम् अस्ति, यत्र च जनसञ्चारः विघ्नं न जनयति सर्वथा । एतत् अभयारण्यम् एकशृङ्गिणः घेण्डामृगस्य आवासस्थानम् अस्ति । २० तमे शतके यदा आंग्लसर्वकारस्य शासनम् आसीत् तदा एतेषां मृगयया मारणं महता प्रमाणेन प्रचलति स्म । अतः तेषां जातिः विनाशदशाम् आपन्ना । तदा जागरणं प्राप्तवान् सर्वकारः तेषां मारणं न्यषेधयत् । तेषां संरक्षणाय अभयारण्यम् अकल्पयत् । १९४०तमे वर्षे वन्यजीवि-संरक्षणस्थलत्वेन स च प्रदेशः घोषितः । १९७४ तमे वर्षे तत् राष्ट्रियाभययारण्यं जातम् । ब्रह्मपुत्रनदस्य तीरे स्थितः एषः प्रदेशः अद्य सहस्राधिकानां घेण्डामृगाणाम् आवासस्थानम् अस्ति । अत्र जलवृषभः, पङ्कप्रियः हरिणः, गाङ्गेयः डाल्फिन् इत्यादयः अपि द्रष्टुं शक्याः ।

यन्तः तस्याः उत्तरक्रियां निर्वर्तितवन्तः । शवः उद्याने कुत्रचित् निखातः ।

सप्ताहाभ्यन्तरे तत्र एका लता उद्भूता, यत्र तेजोमालायाः निखननं कृतम् आसीत् । सा च कूष्माण्डलता । सा दिने दिने अवर्धत । अचिरात् एव तस्यां महन्ति कूष्माण्डफलानि अपि बहूनि जातानि । कदाचित् कश्चन यात्रिकः तानि दृष्ट्वा आशया एकम् अवचेतुम् उद्युक्तः । तदा कश्चन स्वरः श्रुतः – ''भोः, मां मा स्पृशतु कृपया । अहं तेजोमाला अस्मि'' इति । लतातः एतत् वचनं श्रुत्वा भीतः सः यात्रिकः ततः पलायितवान् ।

कूष्माण्डलतया यत् उक्तं तत् विमात्रा अपि ज्ञातम् । 'अहो, दुष्टा एषा लतारूपं प्राप्य प्रवृत्तं वदन्ती अस्ति । प्रवासात् प्रतिनिवृत्तः मम पतिः इतः यदि प्रवृत्तं सर्वं जानीयात् तर्हि सः मां मारयेत्' इति चिन्तयित्वा सा क्रोधेन तां लतां नाशितवती ।

ततः केषुचित् एव दिनेषु गतेषु तत्र एकं मरीचिकासस्यम् उत्पन्नं, यत्र पूर्वं कूष्माण्डलता आसीत् । अचिरात् एव तत् मरीचिकासस्यं रक्ताभिः हरिताभिः च मरीचिकाभिः शोभमानं जातम् ।

गोपालकाः कदाचित् तेन मार्गेण गच्छन्तः काश्चन मरीचिकाः अवचेतुम् उद्युक्ताः । तदा तैः वचनं श्रुतम् – ''भो भोः, मां मा स्पृशन्तु ।

अहं मरीचिकासस्यं नास्मि, प्रत्युत तेजोमाला अस्मि'' इति । 'तेजोमाला पिशाचरूपेण आगत्य एवं वदन्ती अस्ति' इति विचिन्त्य ते गोपालकाः ततः पलायनं कृतवन्तः ।

प्रवृत्तं ज्ञातवती विमाता तत् मरीचिकासस्यम् अपि नाशितवती । तत् सस्यं ब्रह्मपुत्रनदे क्षिप्तवती च । यत्र तया सस्यं पातितं तत्र एकं सुन्दरं कमलम् उत्पन्नम् ।

सुदीर्घप्रयाणं समाप्य भृगुः भाविजामात्रा सह प्रत्यागच्छन् ब्रह्मपुत्रनदे नौकां चालयन् आसीत् । भाविजामाता नदे सञ्चरन् तत् सुन्दरं कमलं दृष्टवान् । आनन्देन सः तत् अवचेतुम् उद्युक्तः ।

तावता पुष्पम् अवदत् - ''मां मा स्पृशतु कृपया । अहं कमलं न, प्रत्युत तेजोमाला अस्मि'' इति ।

एतत् श्रुत्वा सः तरुणः आश्चर्यचकितः । भृगुः तु क्षणकालं स्तब्धः । पुत्र्याः मरणं न श्रुतम् आसीत् तेन । किन्तु यः ध्वनिः श्रुतः सः तु पुत्र्याः एव आसीत् ।



अतः सः उच्चैः अवदत् - ''वत्से ! कुत्र अस्ति भवती ? कृपया मम दृष्टिगोचरतां प्राप्नोतु'' इति ।

एतत् प्रीतिपूर्णं वचनं श्रुत्वा कमलं तेजोमालारूपेण परिवृत्तं जातम् । सा पितरं प्रीत्या आलिङ्ग्य अश्रूणि स्रावितवती । प्रवृत्तं सर्वं पितरं निवेदितवती च । तेजोमालायाः विषये स्वपत्न्या कृतं क्रूरव्यवहारं, तेजोमालायाः मारणं च श्रुतवतः भृगोः रक्तम् उत्तप्तं जातम् । तस्य क्रोधः शतगुणितं प्रवृद्धः ।

ततः ते सर्वे गृहं प्रत्यागताः । पुत्र्या तेजोमालया भाविजामात्रा च सह भृगुः गृहस्य अन्तः यदा पदं स्थापितवान् तदा काञ्चनायाः मुखं विवर्णं जातम् । 'मम कथा समाप्ता' इति ज्ञातवती सा ।

भृगुः तां केशेषु गृहीत्वा पादाभ्यां प्रहृत्य गृहात् निष्कासितवान् । ततः तेजोमालायाः विवाहः सवैभवं प्रवृत्तः । सा पत्या पित्रा च सह सुखेन जीवितवती ।

## दर्शनयोग्यानि स्थलानि

कामाख्यामन्दिरं नीलाचलस्य १६० मीटरोन्नते शिखरे विराजते । एतत् मन्दिरं देशस्य प्रमुखेषु शक्तिपीठेषु अन्यतमम् अस्ति । महाशक्तिशालिनी 'शक्ति'मूर्तिः अत्र पूज्यते । अत्रत्या आराध्यदेवता अस्ति 'कामाख्या' । एषा देवतासु अतिप्रबला अस्ति ।

# वार्ताविशेषः

## सक्षीरकूपीकचलनस्पर्धा



तरुणवाचकाः भवन्तः अण्डचमसीय-धावनस्पर्धां जानीयुः एव, या च शालाजीवने ज्ञातपूर्वा स्यात् । चमसे अण्डं संस्थाप्य (एषु दिनेषु सर्वत्र अण्डस्य स्थाने जम्बीरफलं स्थाप्यते) चमसं मुखेन गृहीत्वा निर्दिष्टदूरं क्रमणीयम् इति स्पर्धानियमः । यदि पतनं भवति तर्हि स्पर्धातः निवृत्तिः भवति । एषु दिनेषु एतादृशी एव विशिष्टा काचित् स्पर्धा प्रवृत्ता । दशाङ्गुलमितां क्षीरकूपीं शिरसि स्थापयित्वा १३३ कि.मी.दूरं क्रमणीयम् इति स्पर्धानियमः आसीत् । यदि कूपीपातनं विना स्वयं च अपतित्वा तत् दूरं क्रम्यते तर्हि कूपीस्थं क्षीरं पातुं शक्यते, पारितोषिकम् अपि प्राप्यते इति सूचितम् आसीत् । एषा स्पर्धा आस्ट्रेलियादेशस्य सिड्नीनगरे प्रवृत्ता । भारतीयमूलः सुरेश जियाचिम् एतस्यां विजयी जातः । तावद्दूरं गमनसमये क्षीरं तु दूषितम् आसीत्, येन च सः तत् पातुं न अशक्नोत् । पारितोषिकं तु तेन प्राप्तम् । गिन्नीसपुस्तके तदीयस्य नाम्नः उल्लेखनं जातम् ।

## पिपीलिकानां सङ्ग्रहालयः



एषः तु पिपीलिकाकारकः भवितुं न अर्हति, यतः अत्र एकलक्षाधिकाः पिपीलिकाः सन्ति । एषः सङ्ग्रहालयः थैल्याण्ड्देशस्य केसेट्-सार्ट्विश्वविद्यालये अस्ति । अरण्यविभागः सङ्ग्रहालयस्य दायित्वं निर्वहति । अत्र प्रायः उपशतविभिन्नकुलीयाः पिपीलिकाः, ५५० सजीवपिपीलिकानां वल्मीकाः च सन्ति । १००००० विधाः पिपीलिकाः 'अल्कोहाल्'-द्रवेण रक्षिताः सन्ति अपि । अतः यदि भवतां थैल्याण्ड्दर्शनस्य अवकाशः स्यात् (सियाम् श्वेतहस्तिनाम् आवासस्थानम् आसीत् इति स्मरन्ति खलु !) तर्हि दर्शनयोग्यस्थलानाम् आवल्याम् एतस्य सङ्ग्रहालयस्य नाम अपि अवश्यं भवतु ।



# विघ्नेश्वरः

एकदा नारदमुनिः कैलासं प्रति गच्छन् आसीत् । तदा कण्टकमुखी नाम यक्षी विनोदमिश्रितस्वरेण अवदत् - ''हे नारद ! मां परिणयतु तावत् । एतस्मात् ब्रह्मचर्य-बन्धनात् मुक्तः भवतु'' इति ।

तदा नारदः अवदत् - ''अहं तु कलहप्रियः इति लोके प्रसिद्धः । यदि मत्सदृशी कापि प्राप्येत तर्हि अहं परिणयं चिन्तयेयम्'' इति ।

''अहं तु कलहविषये भवन्तम् अतिशेतुं समर्था'' इति अवदत् यक्षी ।

तस्मिन् एव समये विघ्नेश्वरः कुमारस्वामी च परस्परहस्तं गृहीत्वा आगच्छन्तौ आस्ताम् । तौ प्रदर्शयन् नारदः अपृच्छत् - ''किं भवती तयोः कलहम् उत्पादयितुं शक्नुयात् ?'' इति ।

''कुतो न ? एतत् तु लीलया करिष्यामि अहम्'' इति उक्त्वा कण्टकमुखी समीपस्थे दलसरोवरे पतितवती ।

ततः सुवर्णकमलरूपेण उपरि आगत्य अवदत् - ''अहं पार्वतीपरमेश्वरयोः सुपुत्रस्य निमित्तम् एव विकासं प्राप्तवती अस्मि'' इति ।

एतत् श्रुत्वा उभौ अपि सहोदरौ तत् पुष्पं स्वायत्तीकर्तुम् इच्छन्तौ - ''एतत् मह्यम् आवश्यकम्'' इति अहमहमिकया उक्तवन्तौ ।

तदा कुमारस्वामी अवदत् - ''भवान् मम मात्रा निर्मितं क्रीडनकम् । मलिनराशिः भवान्'' इति ।

एतत् श्रुत्वा विघ्नेश्वरः अवदत् - ''भवतः जन्म अपि पङ्कमये शरवणसरोवरे एव खलु अभवत् ?'' इति ।

कुमारस्वामी कोपेन स्वमुष्ट्या यदा प्रहर्तुम् आगतः तदा विघ्नेश्वरः तं स्वशुण्डया उन्नीत-वान् । एतस्मात् क्रुद्धः कुमारस्वामी त्रिशूलेन



तस्य गण्डस्थले प्रहृतवान् । एतत्सर्वं दृष्ट्वा धावन् आगतः नारदः तयोः कलहं निवार्य – ''काचित् स्पर्धा भवतु । तत्र विजेता सुवर्णकमलं प्राप्नोतु'' इति अवदत् ।

''यः समग्रं विश्वं परिक्रम्य शीघ्रम् आगमिष्यति सः सुवर्णपुष्पं प्राप्नोतु'' इति उक्तवान् कुमारस्वामी ।

''उत्तमा योजना'' इति वदन् स्वस्य अङ्गीकारं सूचितवान् नारदः । कुमारस्वामी स्ववाहनं मयूरम् आरुह्य विश्वपरिक्रमणार्थं निर्गतवान् । विघ्नेश्वरः भूमौ उपविष्टवान् ।

एतत् दृष्ट्वा नारदः पृष्टवान् – ''किं भवान् विश्वपरिक्रमणं न करिष्यति ?'' इति ।

तदा विघ्नेश्वरः दीर्घं निश्श्वस्य अवदत् – ''मुनिवर्य ! भाग्यायत्तं फलं सर्वम् । अहम् एतत् लम्बोदरयुक्तं शरीरं वहन् लघुमूषकम् आरुह्य कथं वा विश्वपरिक्रमणं समापयेयम् ? अतः कुमारस्वामी एव स्वर्णकमलं प्राप्नोतु नाम'' इति ।

गणेशस्य कथनं श्रुत्वा नारदः – ''अस्तु नाम, पार्वती-परमेश्वरयोः दर्शनार्थं मया आगतम् आसीत् । तदर्थं गच्छामि अहम्'' इति वदन् ततः निर्गतवान् ।

एतत् श्रुतवतः विघ्नेश्वरस्य मनसि कश्चन विचारः स्फुरितः । सः झटिति उत्थाय पार्वतीपरमेश्वरयोः प्रदक्षिणं त्रिवारं कृत्वा कुमारस्वामिनः आगमनं प्रतीक्षमाणः स्थितवान् ।

विविधानि कष्टानि सोढ्वा कुमारस्वामी विश्वपरिक्रमणं समाप्य प्रत्यागत्य मयूरात् अवतीर्णवान् ।

विघ्नेश्वरः तस्य समीपं गत्वा उक्तवान् – ''सहोदर ! बहूनि कष्टानि अनुभूय भवान् विश्वपरिक्रमणं समापितवान् । अतः स्वर्णकमलं भवान् एव स्वीकरोतु । किन्तु विजयस्तु ममैव । तथापि अहं स्वर्णकमलं न इच्छामि'' इति ।

कुमारस्वामी आश्चर्यं प्राप्य अपृच्छत् – ''भवतः एव विजयः कथम् ?'' इति ।

''अहं तु भवतः प्रत्यागमनस्य बहोः कालात् पूर्वम् एव विश्वप्रदक्षिणं त्रिवारं कृतवान् अस्मि । यदि भवतः सन्देहः तर्हि कमपि पृष्ट्वा तत् दृढीकर्तुम् अर्हति'' इति उक्तवान् विघ्नेश्वरः ।

''विघ्नेश्वरः एव विजयी अस्ति'' इति त्रिवारम् अशरीरवाणी श्रुता ।

एतत् श्रुत्वा कुमास्वामी विघ्नेश्वरं साष्टाङ्गं

नमस्कुर्वन् उक्तवान् - ''भ्रातः ! महता तपसा मया ब्रह्मज्ञानं प्राप्तम् अस्ति । तथापि भवतः पुरतः मया पराजयः अङ्गीक्रियते । भवतः कुशाग्रबुद्धिः क्व ? मम सामान्यज्ञानं क्व ? इदानीम् अहं तारकासुरस्य वधं कर्तुं निर्गच्छन् अस्मि । कृपया आशीर्वादं करोतु'' इति ।

विघ्नेश्वरः कुमारस्वामिनः स्कन्धद्वयं गृहीत्वा उत्थाप्य - ''सहोदर ! कः श्रेष्ठः, कः कनिष्ठः इत्यादिचिन्तनं भवतः मनसि इतःपरं कदापि मा भवतु । भवतः श्रेष्ठता किं न्यूना ? विशिष्टस्य उद्देशस्य साधनार्थं भवान् अवतारं प्राप्तवान् अस्ति । अहं तु मनोविनोदार्थं मात्रा सृष्टं क्रीडनकमात्रम् एव । भवतः जन्म भवेत् इत्येतेन उद्देशेन एव शिव-पार्वत्योः विवाहः सम्पन्नः । तयोः अनुरागस्य फलम् एव भवान् । भवतः विजयः सुनिश्चितः । 'शिवपुत्रस्य हस्तात् एव मम देहत्यागः भवतु' इति तारकासुरस्य अपेक्षा आसीत् । तां पूरयन् भवान् तस्य वधं करोतु'' अवदत् ।

एतदनन्तरं देवानां सेनानित्वेन तिष्ठन् कुमारस्वामी तारकासुरस्य वधार्थं प्रस्थितः । यक्षाधिपतिः कुबेरः कण्टकमुख्यै शापं दत्तवान् - ''अये मायाविनि ! पापिनि ! भवती शिवपुत्रयोः मध्ये कलहम् उत्पादितवती । अतः भवती कण्टकमत्वं प्राप्नोतु'' इति ।

कण्टकमुखी पश्चात्तापं प्रदर्शयन्ती बहुधा अश्रूणि मुञ्चन्ती विलपन्ती कुबेरं शापविमोचनं प्रार्थितवती ।

तदा कुबेरः - ''विघ्नेश्वरस्य अनुग्रहः प्राप्तः चेदेव भवत्याः शापविमोचनं भवेत्''



इति अवदत् । ततः कण्टकमुखी भूलोकम् आगत्य कण्टकसस्यरूपेण जन्म प्राप्तवती ।

कुमारस्वामी देवानां सेनापतिः सन् युद्धं कृत्वा तारकासुरं संहृतवान् । इन्द्रपुत्र्याः देवयान्याः कुमारस्वामिनः च विवाहस्य निर्वर्तनार्थं प्रयत्नाः आरब्धाः । किन्तु कुमार-स्वामी - ''अग्रजस्य विवाहे अजाते, कनिष्ठस्य मम विवाहः कथम् ? अतः एषः विवाहः मास्तु'' इति वदन् विवाहं निराकृतवान् ।

तदा पार्वती विघ्नेश्वरम् उक्तवती - ''अनुजस्य विवाहः भवेत् इति भवतः इच्छा अस्ति एव खलु ? तथा चेत् भवता अपि परिणीतवता भवितव्यम् । एषा एव लोक-नीतिः'' इति ।

''अम्ब ! किमर्थं भवती एतादृशान् निरर्थकनियमान् पालयति ? एकदन्तं लम्बोदरं



गजमुखं मां किमर्थं विवाहगर्ते पातयितुम् इच्छति भवती ?'' इति पृच्छन् विवाहविषये असम्मतिं प्रकटयन् विघ्नेश्वरः प्रथमं विघ्नम् उपस्थापितवान् । ततः सः विविधान् व्याजान् प्रदर्शयन् बहून् विघ्नान् उपस्थापितवान् । एवं स्थिते अपि पार्वती एकदा विवाहविषये अधिकम् अनुरोधं प्रदर्शितवती ।

तदा विघ्नेश्वरः अपरं विघ्नम् उपस्थापयन् – ''अम्ब ! अनुजेन तु तपस्या कृता । अग्रजेन सता मया तपः न कृतम् । मया अपि तपः करणीयं खलु ?'' इति उक्त्वा तपसः निमित्तं गृहात् निर्गतवान् ।

इन्द्रः विघ्नेश्वरस्य तपसि विघ्नं पातयितुम् इच्छन् अप्सरसः प्रेषितवान् । किन्तु अर्का नाम अप्सराः गमनं न अङ्गीकृतवती । अतः इन्द्रः तस्यै शापं दत्तवान् – ''अर्कत्वं प्राप्य भवती भूलोके जन्म प्राप्नोतु'' इति ।

विघ्नेश्वरः स्वस्य तपसः निमित्तं स्थलस्य अन्वेषणं कृतवान् । तत्र कण्टकसस्यानि सर्वत्र आसन् । अर्कसस्येषु मुकुलोद्भवस्य आरम्भः जातः आसीत् । तत्र विघ्नेश्वरः तपः आरब्धवान् । अप्सरसः तस्य पुरतः नृत्यम् आरब्धवत्यः । तासां पादेषु कण्टकानि लग्नानि । शरीरे अपि व्रणाः जाताः । अतः ताः वेदनया आक्रन्दनं कृतवत्यः । एतस्मात् विघ्नेश्वरस्य ध्यानस्य भङ्गः जातः । सः नेत्रे उन्मीलितवान् । कण्टकगुल्मानां विषये तस्य प्रीतिः उत्पन्ना । अप्सरसः भीत्या ततः पलायितवत्यः ।

कण्टकसस्यरूपेण जन्म प्राप्तवती कण्टकमुखी विनयेन प्रार्थितवती – ''भगवन् ! सहोदरयोः भवतोः मध्ये कलहम् उत्पाद्य कुबेरशापं प्राप्य एताम् अवस्थां प्राप्तवती अस्मि । कृपया अनुग्रहं प्रदर्शयतु'' इति ।

तच्च भाद्रपदशुक्लचतुर्थीदिनम् आसीत् । तच्च दिनं विनायकचतुर्थीत्वेन आचर्यते स्म । विघ्नेश्वरः कण्टकमुख्याः शापविमोचनं कुर्वन् उक्तवान् – ''विनायकचतुर्थीदिने जनाः कण्टकसस्यानां फलस्य उपयोगं करिष्यन्ति । इतः भवती स्वस्थानं गन्तुम् अर्हति'' इति ।

एतदनन्तरं सा यक्षी अलकापुरीं गतवती । एतत् दृष्ट्वा अर्का उक्तवती – ''स्वामिन् ! मयि अपि कृपां प्रदर्शयतु । अहम् इन्द्रस्य आज्ञां तिरस्कृत्य एतां दशां प्राप्य अस्पृश्या जाता अस्मि । मम नाम अर्का इति । अहम् अप्सरःकुले जाता । भवतः विषये महती श्रद्धा मम'' इति ।

तदा विघ्नेश्वरः अवदत् – ''एतस्मिन् प्रपञ्चे



अस्पृश्यम् अनुपयोगि च किमपि नास्ति । अहं भवत्याः मुकुलैः रचितां मालां प्रेम्णा धरिष्यामि । भवती द्वापरयुगे कुब्जा सती जन्म प्राप्स्यति । कृष्णः भवतीम् अङ्गी-करिष्यति । इदानीं भवती शापविमोचनं प्राप्तवती अस्ति । अतः भवती आनन्देन स्वलोकं गच्छतु । इन्द्रात् अन्यस्मात् कस्माच्चित् वा भवत्याः भयं न भविष्यति । अर्कसस्यम् आयुर्वेदे आधिक्येन उपयोक्ष्यते । तत् सूर्यस्यापि प्रियं भविष्यति'' इति ।

एतदनन्तरम् अर्का अप्सरोरूपं प्राप्य स्वर्गलोकं गतवती । विघ्नेश्वरः यदा कैलासं गतवान् तदा पार्वती उक्तवती – ''वत्स ! भवतः तपस्या समाप्ता खलु ? अतः इदानीं विवाहे मतिं करोतु'' इति ।

तदा विघ्नेश्वरः – ''तपस्या कथं समाप्ता भवेत् ? वस्तुतः सा न आरब्धा एव । अतः अहं पुनरपि तपस्यायै गच्छन् अस्मि'' इति उक्त्वा ततः निर्गत्य तपसः निमित्तम् अपरं स्थानम् अन्विष्टवान् । स च प्रदेशः वल्मीकैः पूर्णः आसीत् । तत्र उपविश्य विघ्नेश्वरः तपः आरब्धवान् । वल्मीकेभ्यः निर्गताः सर्पाः फूत्कुर्वन्तः विघ्नेश्वरस्य रक्षणं कृतवन्तः ।

तदा इन्द्रः मूषकासुरस्य अनुचरान् उत्तेजयन् उक्तवान् – ''भोः राक्षसाः ! भवतां नायकं मूषकासुरं वाहनं कृतवान् विघ्नेश्वरः भवतां नाशाय तपः कुर्वन् अस्ति । भवन्तः सम्भूय आक्रमणं कृत्वा प्रतीकारं साधयन्तु'' इति ।

एतत् अङ्गीकुर्वन्तः राक्षसाः युद्धार्थं गतवन्तः । तदा पातालतः बहवः सर्पाः आगताः । ते राक्षसानां पीडनम् आरब्ध-वन्तः । एतेन बहवः राक्षसाः मूर्च्छां गताः ।

केचन विषकारणतः मरणं प्राप्तवन्तः । अवशिष्टाः स्वदौर्भाग्यं मूर्खतां च निन्दन्तः, इन्द्रं निन्दावचनानि वदन्तः पलायितवन्तः ।

एतदनन्तरम् इन्द्रः उत्साहिनः देवान् अप्सरसः च मेलयित्वा आदिष्टवान् - "भवन्तः विघ्नेश्वरे प्रेमभावं जनयन्तु" इति । ततः स्वयम् अपि वज्रायुधं गृहीत्वा सः प्रस्थितवान् युद्धाय ।

देवाः अप्सरोभिः सह मिलित्वा नृत्यन्तः गायन्तश्च कोलाहलं कृतवन्तः । एतत् दृष्ट्वा नागाः फूत्कुर्वन्तः गत्वा तान् भायितवन्तः । इन्द्रः वज्रायुधम् उन्नीय नागान् प्रहर्तुम् उद्युक्तः अभवत् । एतस्मात् नागानां कोपः प्रवृद्धः । अतः नागलोकात् सर्वे नागाः आगताः । ते देवान् भाययन्तः स्वर्गपर्यन्तम् अपि गतवन्तः ।

तत्र देवानां नागानां च घोरं युद्धं प्रवृत्तम् । नागाः इन्द्रस्य वज्रायुधप्रहारम् अपि अपरिगणय्य युद्धं कुर्वन्तः महान्तम् उत्पातं जनितवन्तः । एतस्मात् विघ्नेश्वरः सन्तुष्टः । सः सर्पाणां विषये आदरभावं वहन् तान् आभूषणत्वेन धृत्वा कैलासं गतवान् ।

पार्वती सर्पाभरणानि धृतवन्तं विघ्नेश्वरं दृष्ट्वा आश्चर्यचकिता । तदा विघ्नेश्वरः अवदत् - "अम्ब ! पितुः सम्पत्तिः पुत्रैः प्राप्यते यत् तत् लोके सहजम् । पितुः आभरणं ममापि आभरणं भवति चेत् का वा हानिः ? एते नागाः स्वप्राणापायम् अपि अविगणय्य मम प्राणानां रक्षणे कार्यं कृतवन्तः । आत्मीयमित्राणां सहवासः सर्वदा श्रेयोदायकः । अतः अहं नागभूषणः जातः अस्मि" इति ।

विघ्नेश्वरस्य वचनानि श्रुत्वा शिवः मन्दहासं प्रकटितवान् । किन्तु पार्वती गणेशस्य एतेन व्यवहारेण नितराम् असन्तुष्टा जाता । एवं विघ्नेश्वरः स्वविवाहविषये विविधान् विघ्नान् उत्पादयन् कालं यापितवान् ।

पुनः कदाचित् पार्वती विवाहविषये अधिकम् अनुरोधं कृतवती । तदा विघ्नेश्वरः अवदत् - "अम्ब ! किमपि महत् कार्यं साधितं चेदेव कोऽपि जनः महापुरुषत्वेन परिगण्यते । अहम् अपि अनुजः इव यावत् किमपि महाकार्यं न साधयेयं तावत् मम सामर्थ्यं निरूपितं न स्यात् । सामर्थ्यनिरूपणं विना विवाहः न शक्यः । भवती एतत्सर्वं जानाति एव" इति ।

"वत्स ! भवति श्रेष्ठता नास्ति इति केन वा उक्तम् ? श्रेष्ठः जनः एव भवान्" इति उद्वेगेन उक्तवती पार्वतीदेवी ।





# मानवधर्मः

विष्णुपुरनामके ग्रामे विष्णुशर्मा नाम कश्चित् विद्वान् आसीत् । सः तस्मिन् एव ग्रामे लघु गुरुकुलं निर्माय तत्रत्यान् बालान् पाठयति स्म । तस्य पुत्रः ज्ञानशर्मा । सः गणितशास्त्रे महान् पण्डितः । अतः सः राजोद्योगं प्राप्य राजधान्याम् एव वसति स्म ।

विष्णुशर्मा अध्यापकः आसीत् इति कारणतः पूर्वजैः प्राप्तां कृषिभूमिं कृष्यर्थं राजनाथनामकाय कृषीवलाय दत्तवान् ।

राजनाथस्य एकः पुत्रः आसीत् । तस्य नाम सुबुद्धिः इति । स्वनाम्नः अनुगुणमेव सः विद्यां सम्यक् अधीतवान् । तस्य शिक्षणम् अपि विष्णुशर्मणः गुरुकुले एव अभवत् ।

कदाचित् विष्णुशर्मणः पुत्रः ज्ञानशर्मा पितरौ द्रष्टुं सपरिवारं ग्रामम् आगतः । राज्ञः आस्थाने सः उन्नतोद्योगे आसीत् इति कारणतः सः अश्वशकटेन पश्चैः सेवकैः सह आगतः । सुबुद्धिः तस्य वैभवं दृष्ट्वा मनसि अचिन्तयत् यत् मया अपि राज्ञः आस्थाने उद्योगः प्राप्तव्यः इति । स्वस्य एताम् इच्छां सः मातापितरौ अवदत् ।

राजनाथः रमादेवी च तस्य इच्छां श्रुत्वा आश्चर्यचकितौ । राजनाथः स्वपुत्रं बोधयन् अवदत् – ''वत्स ! कृषिः अस्माकं वंशस्य वृत्तिः । अध्ययनस्य वयः एतत् । अतः भवता विद्याभ्यासे एव पूर्णं मनः स्थापनीम् । अत एव गुरुकुले भवन्तं स्थापितवान् अस्मि । भवान् अन्यम् उद्योगं कर्तुम् इच्छति चेत् अस्याः भूमेः परिपालनं केन करणीयम् ? भवान् एतादृशं विचारं त्यक्त्वा कृषिव्यवसाये मनः ददातु'' इति ।

माता रमादेवी अपि तं बोधयन्ती अवदत् – ''वत्स, वयं भवन्तं विना कथं जीवेम ? उद्योगप्राप्तिसमनन्तरं भवान् अस्मान् त्यक्त्वा दूरं गमिष्यति । वयं तु भुवं मातरं मन्यमानाः तस्याम् अतीव आदरवन्तः स्मः । अतः भवता सह आगमनमपि आवयोः असम्भवम् एव'' इति ।



मातापित्रोः वचनेन सुबुद्धेः मनः न परिवर्तितम् । अतः सः मध्यरात्रे कमपि अनुक्त्वा एकस्मिन् स्यूते स्ववस्त्राणि पूरयित्वा धान्यविक्रयणेन प्राप्तम् अल्पं धनं यत् गृहे आसीत् तस्मिन् एव धने किञ्चित् स्वीकृत्य उद्योगस्य अन्वेषणाय प्रस्थितः ।

प्रातःकाले सः अन्यग्रामस्य सीमां प्राप्तवान् । तदा तत्र कश्चन तरुणः तालवृक्षात् मद्यं मृत्पात्रे पूरयित्वा अधः अवतरन् एनं सुबुद्धिं दृष्ट्वा प्रीत्या पृष्टवान् - ''भ्रातः ! कुत्र गच्छन् अस्ति भवान् ?'' इति ।

सुबुद्धिः व्यग्रः सन् अवदत् - ''भवान् मद्यविक्रयणं करोति । एतत् तु नीचकार्यम् । अतः भवता सह मम किमपि कार्यं नास्ति । अहं यत्रकुत्रचिदपि गच्छामि चेत् अपि भवतः का हानिः ?'' इति ।

एतत् श्रुत्वा सः तरुणः हसन् उक्तवान् - ''मम हस्ते मद्यपूर्णं पात्रं दृष्ट्वा किमर्थं भवतः तावती असहना ? कुशः इति मम नाम । अहमपि विद्यावान् एव । पूर्वम् अहम् 'नगरे उद्योगं कुर्वन् सुखजविनं यापयिष्यामि, सर्वेषां पुरतः गौरवं प्राप्स्यामि' इति चिन्तितवान् आसम् । किन्तु सर्वेषां मनुष्याणां किञ्चित् दायित्वं भवति इति मया न ज्ञातम् आसीत् । अतः गृहं त्यक्त्वा प्रस्थितः । मम प्रस्थानेन दुःखितौ मम मातापितरौ रुदन्तौ अन्धौ अभवताम् । एतत् ज्ञात्वा मया गृहं प्रत्यागतम् । इदानीं तयोः मातापित्रोः आनन्दं दृष्ट्वा अहमपि आनन्दम् अनुभवामि । इतोऽपि अधिकम् अहं किमपि न इच्छामि । अनेन जीवनेनैव मया आनन्दः प्राप्यते । भवतः मातापित्रोः अपि एषा एव परिस्थितिः चेत् भवतः गृहं प्रति गमनमेव उचितम्'' इति ।

तस्य वचनं श्रुत्वा सुबुद्धिः विच्छायवदनः अभवत् । तथापि तं भावम् अप्रकटयन् सः तं युवकम् अवदत् - ''भवतः वचने सत्यांशः अस्ति इति अहमपि अङ्गीकरोमि । किन्तु इच्छाः प्रवाहरूपेण प्रवहन्ति । इदानीं तान् इच्छाप्रवाहान् अवरोद्धुं मयि शक्तिर्नास्ति'' इति ।

ततः अग्रे गच्छन् सुबुद्धिः स्वस्य मातापितरौ स्मृतवान् । तेन तस्य हृदयं पीडितम् अभवत् । मध्याह्नपर्यन्तं सः चिन्तयन् एव आसीत् । मध्याह्ने बुभुक्षा तम् अपीडयत् । तावता तेन समीपे किञ्चन कुटीरं दृष्टम् । सः तत्समीपं गतवान् । तस्य कुटीरस्य पार्श्वे कश्चन वृद्धः उपविष्टः आसीत् । तं परितः औषधमूलानि इतस्ततः पतितानि आसन् । सः कमपि

ग्रन्थं श्रद्धया पठन् तस्मिन्नेव मग्नः आसीत् ।

सुबुद्धेः पादशब्दं श्रुत्वा सः शिरः उन्नमय्य तं दृष्ट्वा अपृच्छत् - "आतपे आगतवान् अस्ति खलु भवान् ? इदानीं कुत्र गन्तव्यं भवता ?" इति । सुबुद्धिः तं सविस्तरं स्ववृत्तान्तम् अवदत् ।

वृद्धः सः पूर्णं वृत्तान्तं श्रुत्वा अवदत् - "मम नाम गुरुनाथः । मम कोऽपि बन्धुः नास्ति । यदा अहं विरक्तः अभवं तदा कोऽपि सिद्धपुरुषः स्वेन सह माम् अत्र आनीतवान् । तेन विरचितस्य वैद्यग्रन्थस्य पठनेन अहं औषधस्य विषये, तस्य वैशिष्ट्यविषये च ज्ञानं प्राप्नुवन् अस्मि । इदानीम् अहम् अन्धत्वनिवारणविषयकम् औषधं प्रति अध्ययनं कुर्वन् अस्मि । एषः तस्य सिद्धपुरुषस्य आश्रमः । उषःकाले एव बहिर्गतः सः अचिरात् एव प्रत्यागमिष्यति" इति ।

पञ्चदशनिमेषेषु सः सिद्धपुरुषः आश्रमं प्रत्यागतः । सुबुद्धिविषयकं सर्वं ज्ञात्वा सः तस्य भोजनादिव्यवस्थां कारितवान् ।

ततः सः सुबुद्धिम् उक्तवान् - "मार्गे भवता मिलितः कुशः, जीवनस्य कश्चित् सत्यांशं भवन्तं बोधितवान् अस्ति । सः तरुणः कुशः निश्चयेन धन्यः, येन स्वस्य मातापित्रोः सेवायाम् आत्मसमर्पणं कृतम् । एष एव मानवधर्मः । तमेव धर्मं कुशः अपि अनुसरति । तस्य व्यवहारे सत्यम् अस्ति इति अहं प्रमाणी-करोमि । आगच्छतु, तस्य कुशस्य गृहं गच्छाम" इति ।

सिद्धपुरुषः, गुरुनाथः, सुबुद्धिः च कुशस्य गृहं प्रति प्रस्थिताः । तस्मिन् समये



कुशः गृहे मातापितरौ महाभारतं श्रावयन् आसीत् । सः एतान् त्रीन् अपि सादरं सत्कृतवान् ।

सिद्धपुरुषः कुशम् अवदत् - "भवता क्रियमाणा मातापित्रोः सेवा प्रशंसार्हा अस्ति । भवतः सर्वं विषयम् अनेन सुबुद्धिना अहं ज्ञातवान् । भवतः मातापित्रोः अन्धत्वं दूरीकर्तुम् अहं औषधीयसस्यम् आनीतवान् अस्मि । 'एतयोः पुनः दृष्टिः भवतु' इति भवन्तः त्रयः अपि देवं सम्प्रार्थ्य तयोः नेत्रयोः औषधलेपनं कुर्वन्तु" इति । एवं कथयन् सः प्रथमं गुरुनाथहस्ते औषधं दत्तवान् ।

गुरुनाथः प्रथमं नेत्रयोः तस्य सस्यस्य स्पर्शं कुर्वन् अवदत् - "गुरोः वचनानुगुणं मया एतत् औषधं सज्जीकृतम् । बहूनां दिनानाम् अनन्तरम् अस्य औषधस्य प्रभावः कः इति परीक्षितुं समयः आगतः" इति ।

ततः सः कुशस्य मातापितरौ उक्तवान् - ''अस्य औषधस्य परिणामेन भवतोः दृष्टिः आगता चेत् मम जीवनं सफलं भवति'' इति । एवम् उक्त्वा सः तयोः नेत्रयोः औषधस्य लेपनं कृतवान् ।

पञ्चषाः निमेषाः गताः । किन्तु तस्य औषधस्य परिणामः कोऽपि न जातः । सिद्धपुरुषः इदानीं तदेव कार्यं कर्तुं सुबुद्धिम् उक्तवान् ।

सुबुद्धिः अवदत् - ''अहं गृहं त्यक्त्वा आगतः । किन्तु मातापित्रोः विषये आदरः नास्ति इति न तस्य अर्थः । मया लेपितेन अनेन औषधेन भवन्तौ निश्चयेन पुनः द्रष्टुम् शक्नुतः'' इति । एवं वदन् सः तस्य औषधस्य लेपनं कुशस्य मातापित्रोः नेत्रयोः कृतवान् । किन्तु अनेनापि किमपि प्रयोजनं न अभवत् ।

तदा सिद्धपुरुषः हसन् - ''श्रृणोतु ! गुरुनाथः अनाथः । तथापि तस्मिन् 'अहं कीर्तिमान् भवेयम्' इति महत्त्वाकाङ्क्षा अस्ति । एषः सुबुद्धिस्तु धनिकः भवितुं, वैभवोपेत-जीवनं यापयितुं च इच्छन् गृहं त्यक्त्वा स्वस्य मातापित्रोः दुःखस्य कारणम् अभवत् । इदानीं पश्यन्तु, एषः कुशः मातापित्रोः अन्धत्वं दूरीकर्तुं समर्थः भविष्यति'' इति कथयन् सः सिद्धपुरुषः कुशस्य हस्ते औषधं दत्तवान् ।

कुशः झटिति सिद्धपुरुषं नमस्कृत्य उक्तवान् - ''ययोः मातापित्रोः कारणतः मम जन्म अभवत्, तयोः सेवा एव मम परमधर्मः इति अहं भावितवान् । तयोः इच्छानुगुणं जीवनमेव ममापि आदर्शभूतम् । एष एव उत्तमः मानवधर्मः इति मम अभिप्रायः । अस्मिन् विषये मम अचलः विश्वासः'' इति वदन् औषधं मातापित्रोः नेत्रयोः लेपितवान् ।

क्षणाभ्यन्तरे कुशस्य मातापितरौ द्रष्टुं समर्थौ अभवताम् । तौ सर्वमपि स्पष्टतया द्रष्टुं शक्तौ अभवताम् । एतत् दृष्ट्वा सर्वे आश्चर्यचकिताः ।

सुबुद्धिः सिद्धपुरुषं नमस्कृत्य अवदत् - ''मया ज्ञातं यत् जीवने मातापित्रोः आनन्द-दानम् एव सर्वोत्तमः मानवधर्मः इति'' इति ।

एवम् उक्त्वा सः स्वग्रामं विष्णुपुरं प्रत्यागतः, मातापित्रोः वचनानुगुणं जीवनं यापयन् सुखेन अवसत् च ।





# परपीडनात् आनन्दः

विकारः कश्चन दुष्टः । सः अन्येषां मनसि आशाम् उत्पादयन् तान् पीडयन् सन्तोषम् अनुभवति स्म । कदाचित् सः लघुमार्गे गच्छन् आसीत् । तदा तत्र कश्चन दरिद्रः अञ्जलिं बद्ध्वा प्रार्थितवान् – ''महाराज ! अहं बुभुक्षापीडितः अस्मि । दिनद्वयात् किमपि न खादितं मया । एकं रूप्यकं दत्तं चेत् उदरं पूरयामि अहम्'' इति ।

विकारः तम् आपादमस्तकं दृष्ट्वा उक्तवान् – ''महाराज इति भवान् माम् आहूतवान् । किन्तु मम दृष्ट्या भवान् एव महाराजः । यतः भवतः मुखे तादृशी कान्तिः शोभते । शृणोतु, मया यथा उच्यते तथा क्रियते चेत् भवतः दारिद्र्यम् अपगमिष्यति । भवान् पुनः कदाचिदपि बुभुक्षितः न भविष्यति । अतः किं भवान् मया सह आगच्छेत् ?'' इति ।

दरिद्रः तम् अनुसृतवान् । विकारः तं स्वगृहम् आनीय नूतनवस्त्रं धारितवान् । ततः तम् अन्यस्य गृहं नीत्वा तस्य गृहस्य स्वामिनम् उक्तवान् – ''जनानां सङ्कटं ज्ञातुं राजा वेषं परिवर्त्य आगतः अस्ति'' इति ।

तस्य गृहजनाः वस्तुतः अपि सङ्कट-परिस्थितौ आसन् । अतः योग्यजनं स्वस्य कष्टपरिस्थितिं वक्तुं ते अवकाशं निरीक्षमाणाः आसन् । विकारः अवदत् – ''श्वः प्रातः ग्रामात् बहिः स्थितां धर्मशालाम् आगच्छन्तु । महाराजः भवताम् इच्छानुगुणं धनं स्वयं दास्यति'' इति ।

ततः तं दरिद्रं विकारः अन्यस्य गृहं नीतवान् । तस्य गृहस्य स्वामिनं सैनिकाः कारणं विना कारागृहे स्थापितवन्तः आसन्, ततः विमोचनं कर्तुं शतं रूप्यकाणि इच्छन्ति

स्म ते । विकारः तद्गृहजनान् उक्तवान् - ''श्वः प्रातः भवन्तः सर्वे ग्रामात् बहिः स्थितां धर्मशालां आगच्छन्तु । महाराजः भवतां कष्टं परिहरिष्यति'' इति ।

तस्मिन् ग्रामे कश्चन कविः आसीत् । सः स्वस्य कविताः राजसभायां श्रावयितुम् इच्छति स्म । काचित् वृद्धा समानवयस्कां राजमातरं द्रष्टुम् इच्छति स्म । एतादृशाः अनेके जनाः तस्मिन् ग्रामे आसन् । विकारः सर्वैः सह मिलित्वा तान् सर्वान् सूचितवान् यत् प्रातःकाले ग्रामस्य धर्मशालासमीपम् आगच्छन्तु इति ।

एवमेव सायङ्कालपर्यन्तं प्रवृत्तम् । ततः विकारः तं दरिद्रं स्वगृहम् आनीय ततः वस्त्राणि स्वीकृत्य तम् उक्तवान् - ''गच्छतु, भिक्षाटनं करोतु । श्वः प्रातः ग्रामात् बहिः स्थितां धर्मशालाम् आगच्छतु । तत्र पश्यतु - किं किं भविष्यति इति'' इति ।

परेद्यवि प्रातः विकारः धर्मशालां गतः । तत्रत्येन दृश्येन सः विस्मितः अभवत् । यतः तत्र स्वयं महाराजः एव उपविष्टः आसीत् । विकारः पूर्वस्मिन् दिने यं यं मिलितवान् तेषां सर्वेषां समस्याः सः परिहृतवान् ।

तदा विकारः ज्ञातवान् यत् पूर्वदिने यः दरिद्रः तेन दृष्टः आसीत् सः स्वयं महाराजः एव इति । सः झटिति महाराजस्य पादयोः पतित्वा क्षमां याचमानः उक्तवान् - ''प्रभो, मत्कारणेन अस्य ग्रामस्य जनानां समस्याः परिहृताः । मय्यपि दया करणीया'' इति ।

''अस्तु । किन्तु अद्य आरभ्य भवान् बन्दी भूत्वा ग्रामे मृद्गृहेषु वसतां मध्ये एव वासं कुर्यात् । ग्रामे यत्रकुत्रचिदपि काऽपि समस्या उदेति चेत् जनाः भवन्तं वदिष्यन्ति । भवता तस्याः समस्यायाः परिहारः करणीयः । एषा मम आज्ञा'' इति महाराजः उक्तवान् ।

तदा विकारेण उक्तम् - ''महाराज । भवता कीदृशः कठोरः दण्डः विहितः !'' इति ।

तदा राजा हसन् अवदत् - ''परपीडनात् यः आनन्दम् अनुभवति तेन परोपकारात् एव प्रायश्चित्तं प्राप्तव्यम् । अतः भवते दत्तः दण्डः योग्यः एव '' इति ।





# वृद्धायाः उपायः

सीतारामनामकः पण्डितः कस्मिंश्चित् ग्रामे वसति स्म । तत्रत्यान् बालान् पाठयित्वा सः गुरुदक्षिणां प्राप्नोति स्म । किञ्चित्-कालानन्तरं तस्य समीपे पञ्चशतं रूप्यकाणि सङ्गृहीतानि अभवन् ।

काश्यां विदुषां काचित् सभा आयोजिता आसीत् । तस्यां सभायां भागं वोढुं सीतारामः अपि निमन्त्रितः आसीत् । किन्तु तत्र गन्तव्यं चेत् सीतारामेण धनं कुत्रचित् सुरक्षितरूपेण स्थापनीयम् आसीत् । गृहे एव धनस्य स्थापनं तस्य पत्नी सर्वथा न अङ्गीकृतवती । ''एतेन अपायः सम्मुखीकरणीयः भवेत् । यदा-कदाचिदपि चोराः आगत्य धननिमित्तं मम प्राणान् अपहरेयुः'' इति उक्तवती सा ।

अतः सीतारामः काशीनाथनामकस्य मित्रस्य आपणं गत्वा पृष्टवान् – ''कस्य समीपे स्थापितं चेत् मम धनं सुरक्षिततया तिष्ठेत् ?'' इति ।

तदा काशीनाथः उक्तवान् – ''धनस्य विषये भगवति ब्रह्मणि अपि विश्वासः न कर्तव्यः'' इति ।

यदा तयोः सम्भाषणं प्रचलति स्म तदा आपणे सेवकः कस्यैचित् महिलायै तैलं दत्त्वा धनं स्वीकृतवान् । सा का इति विचार्य काशीनाथः सेवकं तर्जयन् उक्तवान् – ''मूर्ख, कतिवारं वक्तव्यं – ग्राहकेभ्यः अधिकं धनं न स्वीकरणीयम् इति । अस्माभिः पञ्च-विंशतिपैसातः अधिकः लाभांशः न स्वी-करणीयः । भवान् तु पञ्चसप्ततिपैसाः स्वीकृतवान् । पुनः भवान् यदि एवं करिष्यति तर्हि भवन्तम् उद्योगात् निष्कासयिष्यामि । सा यदा पुनः किमपि क्रेतुम् आगमिष्यति तदा तस्याः धनं भवता प्रत्यर्पणीयम्'' इति ।

एतत् दृष्टवतः सीतारामस्य मनसि काशीनाथस्य विषये पूर्णः विश्वासः उत्पन्नः । 'काशीनाथसदृशः निष्कपटः अन्यः भवितुं

*पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा*



न अर्हति' इति चिन्तितवान् सीतारामः । ततः सः आपणात् यत् यत् क्रेतव्यम् आसीत् तत्सर्वं क्रीत्वा गृहं प्रति गतवान् । गृहं गत्वा सर्वं धनं कस्मिंश्चित् स्यूते पूरयित्वा काशीनाथाय दत्त्वा – ''काशीनाथ, एतं धनस्यूतं स्वीकरोतु । यावत् अहं काशीतः न प्रत्यागमिष्यामि तावत् एतत् धनं भवता रक्षणीयम्'' इति उक्तवान् ।

तदा काशीनाथः – ''हे भगवन् । मया न शक्यते एतत् । अहं तु भवतः धनं न स्पृशामि एव । यदि भवान् इच्छति तर्हि मम गृहे कुत्रचित् एतत् निखाय स्थापयतु । प्रत्यागमनानन्तरं ततः तत् प्रतिस्वीकरोतु च'' इति उक्तवान् ।

'एषः निश्चयेन सज्जनः अस्ति' इति निश्चित्य सीतारामः काशीनाथस्य गृहे एकत्र गर्तं कृत्वा धनस्यूतं तत्र स्थापयित्वा निश्चिन्ततया ततः गतवान् । काशीं गत्वा विदुषां सभायां भागम् ऊढवान् । स्वग्रामं प्रति आगत्य सः काशीनाथस्य गृहं गत्वा तम् उद्दिश्य – ''अहं मम धनं प्रतिनयामि'' इति उक्तवान् ।

तदा काशीनाथः – ''अवश्यं नयतु । तत् धनं तु भवदीयम् एव । धनं कुत्र स्थापितम् इति भवान् स्मरति खलु ?'' इति पृष्टवान् ।

यत्र गर्तं कृत्वा धनं स्थापितम् आसीत् तत्र पुनश्च गर्तं कृतवान् सीतारामः । किन्तु धनस्यूतः तत्र नासीत् । एतत् यदा सीतारामः उक्तवान्, तदा काशीनाथः – ''तस्मिन् विषये अहं किं जानामि ? अहं तु तत् धनं न दृष्टवान् एव । भवता स्यूतः कुत्र स्थापितः इति अहं न जानामि एव'' इति उक्तवान् ।

'काशीनाथः मां वञ्चितवान्' इति अनुक्षणं ज्ञातवान् सीतारामः । निराशः भूत्वा सः गृहं प्रति गतवान् । मार्गे सः रुक्मिणीनामिकया वृद्धया मिलितवान् । वृद्धा तं दृष्ट्वा – ''पुत्र ! कदा प्रत्यागतं भवता ? दुःखितः इव दृश्यते ! किम् अभवत् ?'' इति विचारितवती ।

सीतारामः प्रवृत्तं सर्वं विवृतवान् । तदा सा क्षणं विचिन्त्य – ''पुत्र ! भवतः सर्वं धनं कथं प्रतिस्वीकरणीयम् इति अहं वदामि'' इति उक्त्वा कमपि उपायं सूचितवती ।

घण्टाद्वयस्य अनन्तरं वृद्धा सहस्र-रूप्यकमूल्यकानि आभूषणानि स्वीकृत्य काशीनाथस्य समीपं गतवती । काशीनाथम् उद्दिश्य – ''दशभ्यः वर्षेभ्यः पूर्वं मम पुत्रः विद्याभ्यासार्थं काशीं गतवान् आसीत् । अद्यपर्यन्तं तस्य कापि वार्ता नास्ति । अहं तु वृद्धा अभवम् । यदाकदाचिदपि मम मरणं भवितुम् अर्हति । ततः पूर्वं काशीं प्रति गतस्य मम पुत्रस्य विषये ज्ञातुम् इच्छामि । अहम्

एकाकिनी अस्मि । मदीयः इति अस्मिन् जगति कोऽपि नास्ति । मम समीपे द्विसहस्र-रूप्यकमूल्यकानि एतानि आभूषणानि सन्ति । यदि मया सह एतानि नयेयं तर्हि लुण्ठाकाः अपहरणं कुर्युः । भवान् तु धर्मात्मा अस्ति । काशीं प्रति गमनात् पूर्वं सीतारामः अपि भवतः समीपे धनं स्थापितवान् अस्ति इति श्रुतम् । भवान् इतरेषां धनं मृत्तिकासमं भावयति इत्यपि श्रुतवती अस्मि । यावत् अहं न प्रत्यागमिष्यामि तावत् एतानि आभूषणानि भवतः समीपे एव भवन्तु'' इति उक्तवती ।

काशीनाथः चिन्तितवान् यत् मम भाग्योदयकालः सन्निहितः इति । वृद्धा सीता-रामस्य प्रत्यागमनविषये न जानाति इति तस्याः सम्भाषणेन ज्ञातवान् काशीनाथः । अतः सः ताम् उक्तवान् - ''भवत्याः आभूषणानि भवती स्वहस्तेन मम गृहे कुत्रचित् निखाय स्थापयतु । प्रत्यागत्य नयतु च'' इति ।

तावति काले सीतारामः तत्र आगत्य - ''काशीनाथवर्य ! अहं यत्र गर्तं कृतवान् आसं तत् स्थानं विस्मृतवान् आसम् । इदानीं तत् स्थानं स्मृतं मया । इदानीं तत्र गत्वा खननं करोमि'' इति उक्तवान् ।

काशीनाथः भीतः अभवत् । 'पञ्चशत-रूप्यकाणां विषये सीतारामस्य वञ्चना जाता अस्ति इति यदि वृद्धा जानीयात् तर्हि आभूषणानि अत्र न स्थापयेत्' इति विचिन्त्य सः - ''सीताराम ! भवान् इव अहम् अपि सन्देहग्रस्तः आसम् । अतः अन्यत्र खननं कृतं मया । तत्र भवतः धनस्यूतः प्राप्तः'' इति उक्त्वा अन्तर्भागतः स्यूतमानीय दत्तवान् ।

तावता वृद्धा सीतारामं नखशिखान्तं दृष्ट्वा - ''कः ? सीतारामः वा ? काशीतः कदा आगतं भवता ? किं भवान् तत्र मम पुत्रं दृष्टवान् ?'' इति पृष्टवती ।

तदा सीतारामः अवदत् - ''किञ्चित्-कालात् पूर्वम् एव अहम् आगतवान् । काश्यां भवत्याः पुत्रः मिलितवान् आसीत् । भवत्याः विषये सः विचारितवान् । दिनद्वयानन्तरं सः अत्र आगमिष्यति । तस्य विषये भवत्या चिन्ता करणीया नास्ति'' इति ।

तदा वृद्धा - ''भवान् मिलितवान् यत् तत् लाभाय जातम् । अन्यथा अहं काशीं गतवती स्याम् । इदानीं तु तत्र गमनस्य आवश्यकता नास्ति'' इति वदन्ती ततः गतवती । प्रवृत्तं दृष्ट्वा काशीनाथः दिङ्मूढः अभवत् ।



चन्दमामायाः प्रस्तुतिः

# अजेयः गरुडः

१५

चित्रं - पाणिः

चन्द्रपुर्याः सेनाधिपतिः आप्तैः सह तान्त्रिकेण नागबन्धुना मेलितुं पर्वतप्रदेशस्थं मन्दिरं प्रति गच्छति । तस्य आशा आसीत् यत् अदृश्यतां गतस्य राज्ञः विषये किमपि ज्ञायेत इति । तान्त्रिकः तं स्वसमीपे उपवेश्य अनुष्ठानकार्ये मग्नः भवति ।

अनुष्ठानं पश्यन् नरेन्द्रदेवः सम्मोहितः इव उपविशति ।

देवताह्वानपुरस्सरं तान्त्रिकस्य अनुष्ठानस्य आरम्भः भवति ।

राजर्षिः नागबन्धुमहाराजः जयतात् ।

जयतु

राजर्षिः जयतात् ।

महाराजः जयतात् ।

जयतु

राजर्षिः नागबन्धुमहाराजः जयतात् ।

जयतु जयतु

भक्तगणः भूताविष्टः इव नृत्यति स्म । गरुडरूपेण स्थितं कञ्चित् युवकं परितः ते नृत्यन्ति स्म ।

सः युवकः आश्चर्यचकितः अस्ति । भक्तगणः इदानीं किं कुर्यात् इति न जानाति सः । भक्ताः अतिसमीपम् आगच्छन्ति ।

ते पीडाम् अनुभवन्तः इव दृश्यन्ते । ते एकैकशः भूमौ पतन्ति । तेषां हस्ते स्थिताः सर्पाः स्वतन्त्राः भवन्ति ।

हा ! हा !

हो ! अहो !

अहो, किम् एतत्

हा ! हन्त !

केचन अरण्यवासिनः धावन्तः आगच्छन्ति ।

किं ते सर्पाः माम् अपि पीडयेयुः ?

किं जातम् ? उत्थीयताम् ।

अहम् अपशकुनं पश्यामि । अनुष्ठानस्य अनुवर्तनं न शक्यम् ।

क्रोधाविष्टः तान्त्रिकः मन्दिरस्य अन्तः गच्छति । केचन भक्ताः तम् अनुसरन्ति ।

कोऽपि दोषः जातः स्यात् ।

किं लक्षितं भवता ? गरुडपुरुषः सुरक्षितः आसीत् । न काऽपि हानिः तस्य ।

नरेन्द्रदेवस्य वचनं यावत् न समाप्तं तावता कश्चन भक्तः मन्दिरात् बहिः आगच्छति ।

अनुष्ठानं स्थगितम् अस्ति । महाराजः आज्ञापयति यत् उपायनम् अग्निकुण्डे स्थापनीयम् इति ।

भक्तान् दशतः सर्पान् दृष्ट्वा अरण्य-
वासिनः नितरां भीताः भवन्ति ।

आगच्छतु, एतस्मात् घोरस्थानात् शीघ्रं निर्गच्छाम ।

अहो ! भयजनकं दृश्यम् एतत् !

मा पलायन्ताम् । शान्ताः भवन्तु । गरुडाय कुक्कुटशावकान् अग्निकुण्डे परित्यजन्तु ।

अरण्यवासिनः हस्तस्थं कुक्कुट-
शावकं क्षेप्तुं पङ्क्तौ तिष्ठन्ति ।

तान्त्रिकः मन्दिरात् बहिः
आगच्छति । सः क्रुद्धः अस्ति ।

किम् एतत् ! भूमिः कम्पमाना अस्ति !

भूकम्पस्य अनुभवं प्राप्य ते
इतस्ततः धावन्ति, कुक्कुट-
शावकाः च उड्डयन्ते ।

मम शत्रुः युवक-रूपेण प्रकटतां गतः अस्ति । सः आत्मानं गरुडं वदति ।

युवकः ! गरुडः !

*अनुवर्तते*

**विनोदसमयः**

अयि भोः सर्वे उत्साहिबालाः ! अत्रास्ति किञ्चित् भवतां विश्रान्तिसुखार्थं तथा सन्तोषार्थम् !

## डयमानं मित्रम् !

एषः राक्षसः स्वशक्त्यपेक्षया अधिकं खादितवान् अस्ति । तेन खादितान् प्राणिनः भवन्तः किम् अभिज्ञातुं शक्नुवन्ति ?

## भेदम् अभिजानन्तु !

I



एते द्वे
चित्रे समाने
दृश्येते ।
परन्तु एतयोर्मध्ये
सन्ति अष्ट भेदाः ।
तान् अभिजानन्तु ।

II



एते विनोदाभ्यासाः भवतां सर्जनशीलतायाः
अवलोकनसामर्थ्यस्य
व निकषायन्ते ।

## 'मीन'कला

अत्यन्तं सुखेन मीनं लिखन्तु । भवद्भिः करणीयम् एतावदेव –एतानि चित्राणि दृष्ट्वा क्रमशः तथैव लिखन्तु ।



## शुनक्याः द्वन्द्वम्

शुनकी स्वसख्याः मोल्याः समीपं गन्तुम् इच्छति । परन्तु मार्गमेकं विहाय सर्वत्र अपायकारिप्राणिनः दृश्यन्ते । स्वसखीं प्राप्तुं तस्याः कृते साहाय्यं भवन्तः किं कुर्वन्ति ?



## एकया रेखया

अस्मिन् सामान्यजन्तौ को वा विशेषः अस्ति ? सकृत् प्रवर्तितायाः अङ्गुल्याः विना उत्थापनं लिखितमस्ति एतत् । भवन्तः प्रयत्नं कर्तुम् इच्छन्ति किम् ?






# चित्रशीर्षिकास्पर्धा





**उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया –

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु – ५६००८५**

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## पुरस्कृतशीर्षिका





**जीवनौषधं नलिकाजलम्**
**मधुरं मधुरं नारिकेलजलम्**

## अभिनन्दनानि

**'मे'मासीयस्पर्धाशीर्षिकाप्रेषिका –**

**के.सरस्वती, सरस्**

*चेडिचेरी, पेरुवलधपदम्पा पो.*

कण्णूरु, केरलम् – ६७० ५९३

**विनोदसमयस्य उत्तराणि (पृष्ठम् – ६५)**

**भेदम् अभिजानन्तु :** *१. प्रथमचित्रे एकं सङ्गीतचिह्नं न्यूनम् अस्ति । २. प्रथमचित्रे वस्त्रे एकः बिन्दुः न्यूनः अस्ति । ३. द्वितीयचित्रे बालकस्य युतके कोषः नास्ति । ४. प्रथमचित्रे पक्षिणः एकं पिच्छं न दृश्यते । ५. प्रथमचित्रे बालकस्य मुखे दन्ताः न दृश्यन्ते । ६. द्वितीयचित्रे शुनकस्य एकः कालकः न दृश्यते । ७. द्वितीयचित्रे पुष्पघटे एकः बिन्दुः न दृश्यते । ८. प्रथमचित्रे एकः कालकः न दृश्यते ।*

दयमानं मित्रम् !



Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 600 026 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : Viswam

PERFETTI

# असली बनाए लखपति!




# नकली पहनाए हथकड़ी।




व्यापार के सदस्यों को चेतावनी दी जाती है कि Alpenliebe ब्राण्ड के जैसा दिखने वाले नकली ब्राण्ड बनाना, स्टॉक करना या बेचना कानूनन अपराध है।

---

## जीतिए 51 लाख रुपये के इनाम!

पहला इनाम




1 एक लाख रु. का नकद इनाम

दूसरा इनाम



10,000 टाइटन डैश घड़ियां

तीसरा इनाम



1,00,000 परफेटी गिफ्ट हैंपर

नीचे लिखे वाक्य को पूरा कीजिए।

**Alpenliebe** 'Rich................ Caramel Candy'

Send your entries to **'Alpenliebe, GPO, New Delhi - 110001'**.

Name :.................................... Address :..........................................................................

..........................................................................................................................

Alpenliebe के 10 रैपर यहाँ संलग्न कीजिए।

Last date for receipt of entries is 15/07/02. Winners to be selected by a Lucky Draw to be held on 31/07/02. Winners will be individually informed by post.

TERMS & CONDITIONS: Entries should only be in English sent by ordinary post addressed to **Alpenliebe, GPO, New Delhi - 110001**. Photocopies of this form can also be used. For an entry to be valid consumers must attach 10 Alpenliebe Mono wrappers and write their name and address clearly in English along with the entry. Offer closes 15th July 2002. Perfetti India Pvt. Ltd. shall not be responsible for any postal delays or lost entries. Cash Prize shall be disbursed through Cheque in favour of the Winner. Any tax liability arising out of the prizes shall be borne by the Winner. The Winners of Titan Dash Watch(es) and Perfetti Gift Hampers shall receive their Prize through registered post. The First Prize Winner shall be contacted individually for the prize and will need to establish his/her identity. Prize Winners shall be selected through draw of lots from amongst the correct entries received during the offer, in the presence of two independent judges, to be held on 31st July, 2002. Offer not open to the employees of Perfetti India Pvt. Ltd., McCann-Erickson India Ltd. and their immediate relatives. Decision of Perfetti India Pvt. Ltd. shall be final and binding. No correspondence shall be entertained in this regard. Disputes, if any subject to jurisdiction of New Delhi Courts. Offer not valid in the State of Tamil Nadu.

